## ॥ अथ श्रीमद्भागवतलीलाकल्पद्रुमः प्रारभ्यते ॥

# ॥ अथ श्रीमद्भागवतलीलानुक्रमणिकाप्रारम्भः ॥

इतिखानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविंदशास्त्रिविरचिताश्रीभागवतलीलाकल्पद्रुमस्थ-विषयानुक्रमणिका सम्पूर्णा ॥

ॐस्वस्तिश्रीगणेशायनमः ॥ श्रीमल्लक्ष्मीवेंकटेशायनमः ॥ ॥ गणेशंदिनेशंगिरीशंरमेशंतथैषांगुरून्मातरंतातकञ्च ॥ निजंचेष्टदेवंमुहुर्वै प्रणम्यशुकंव्यासदेवंसदाभारतीञ्च ॥ १ ॥ शुकप्रोक्तशास्त्रेऽखिलायाचलीलाप्रवक्ष्येस्यतामादिमेपद्यबन्धे ॥ भरद्वाजगोत्रोद्भवंकंजनेत्रांगि रौनीलसंज्ञेवसन्तंप्रणम्य ॥ २ ॥ कृष्णभक्तःकंजनेत्रःश्रीनीलगिरिवासकृत ॥ लीलाचिंतामणिस्तेनश्रीमद्भागवतस्यहि ॥ आद्यपद्येक तोयत्रसर्वालीलास्यसूचिता ॥ लीलाकल्पद्रुमग्रन्थस्तद्दर्शितपथामया ॥ ३ ॥ नवोविरचितोनूनंश्रीवंशीधरशर्मणा ॥ खरडाख्येपत्तने चगौडवंशोद्भवेनहि ॥ ४ ॥ शुभकौशिकगोत्रेणजनिसाफल्यताप्तये ॥ कृष्णलीलास्मृतौकालःसफलोनिष्फलोऽपरः ॥ ५ ॥ क्षणोऽप्य त्राश्वमेधादेर्बहुपुण्यफलप्रदः ॥ श्रीकृष्णस्यप्रतिकृतिर्वाङ्मयीयंनसंशयः ॥ ६ ॥ पुराणंश्रीभागवतंयद्व्यासेनप्रदर्शितम् ॥ अतोस्यदर्श नात्स्पर्शात्पाठान्मुक्तिर्नसंशयः ॥ यद्गृहेपुस्तकंचैतद्गृहंतद्धरिमन्दिरम् ॥ ८ ॥ प्रतिदिनमिदमायुःक्षीयतेव्यर्थमेवहरिविमुखनराणांगृह्यकृ त्यैरपार्थैः ॥ इतिमनसिविचार्य्यसर्वदाकृष्णलीलानिजपरमसुखाप्त्यैदेहवद्भिःसुगेया ॥ ९ ॥ श्रीकृष्णलीलागानंतुश्रीमद्भागवतस्ययत ॥ पाठश्रुतिविचाराद्यैर्दिनादेर्नयनंमतम् ॥ १० ॥ श्लोकंवाश्लोकमर्द्धंवानित्यंभागवतोद्भवम् ॥ यःपठेत्प्रयतोभूत्वामुक्तिभागीभवेद्द्विसः ॥ ११ ॥ नश्रुताशुकशास्त्रस्यकथायेननरेणहि ॥ तज्जन्मैवमुधाज्ञेयमरण्येरुदनंतथा ॥ १२ ॥ नराकारोहिसपशुःखुरशृंगविवर्जितः॥पृथि वीभारभूतश्चविनाभागवतश्रुतिम् ॥ १३ ॥ बहुनाकिमिहोक्तेनशृणुसारंपरात्परम् ॥ पठनंपाठनंध्यानंपूजनंवंदनंसदा ॥ १४ ॥ कर्त्तव्यं नियतंपुंभिःश्रीमद्भागवतस्यच ॥ कलौनान्यःपरोलाभइत्येवंव्यासभाषितम् ॥ प्रमाणपथमारूढाव्याख्येयंस्यादुदाहृता ॥ कोशव्याकर णाद्यैश्चमानैराम्नायजैस्तथा ॥ १६॥ अथतत्रभवान्भगवान्व्यासःश्रीनारदोपदेशतःस्वस्वान्तःसौस्थ्यायपरमकारुणिकतयालोकानुग्रहा यश्रीमद्भागवतशास्त्रंप्रदिदीपयिषुरादौजन्माद्यस्येत्यादिपद्यमयींनांदींन्यबध्नात । तत्रचपुण्डरीकाक्षदर्शितपथानिजसंसृतिबंधनिवृत्तये सर्वस्कन्धोद्भवलीलालेशंदिदर्शयिषुःकौशिकगोत्रगौडवंशजवंशीधरशर्मानिष्प्रत्यूहग्रन्थपूर्त्तिकामःश्रीगणेशध्यानरूपंमंगलमध्यानयति ॥ जन्माद्यस्येति ॥ ॥जन्मा ऽऽद्यस्य यतो न्वयादि तरतश्चार्थे ऽष्वभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥

तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥ ॥ वयंतंपरं
परब्रह्मरूपंगणेशंसदाधीमहि । तंकंयतोयस्याःआद्यस्यजंगमापेक्षयाद्यस्यस्थावरस्यार्थाद्धिमालयस्यसकाशाज्जन्मसापार्वतीयंतेजोवा
रिमृदाआंप्रसिद्धंनिरस्तकुहकंतेनेचकार । तेजःप्रज्वालकंवारितेजोवारितैलम् । शाकपार्थिवादिसमासः । तस्यमृद्मर्दनंतेनतथातै
लाभ्यंगजकिट्टेनेत्यर्थः । निरस्तंनिर्गतंकुहकंवैरूप्यंयत्रतत्तथाअतिसुंदरंनराकारंकृतवती । प्रमाणंचात्रभविष्योत्तरंतत्रत्यवाक्यानि
विस्तरभियेहनलिखितानीति । अनुपश्चात्अभिज्ञःनबिभेतिकुतोपीत्यभिः । डिरत्रभियः । जानातिसर्वमितिज्ञाः । क्विबत्रजाना
तेः । अभिश्चासौज्ञश्चेत्यभिज्ञास्तस्मादभिज्ञःसकाशात् । आतोलोपः । इतरतइतरत्वमर्थाद्गजमुखत्वमयात् प्राप । अत्रत्यवृत्तंभविष्यो
त्तरतोऽवसेयं । अतएवयत्रत्रिसर्गोऽमृषा । किंतुद्विसर्गःनृगजसर्गोऽमृषासत्यः । गजाननत्वात् । सूरयोविद्वांसःयत्यंहृदामुह्यंतिध्यायं
ति । मुहिरत्रध्यानेधातूनामनेकार्थत्वात् । धातवश्चोपसर्गाश्चनिपाताश्चेतितेत्रयः ॥ अनेकार्थाःस्मृताःसर्वेपाठस्तेषांनिदर्शनामित्युक्तेः ।
कस्मैआदिकवयेप्राक्तनकवित्वाय । भावप्रधानोत्रनिर्देशः । योगणेशःब्रह्मसाक्षाद्ब्रह्मैव । सर्ववाक्यंसावधारणमितिन्यायादेवकारोत्रबो
ध्यः । तथाचश्रुतिः । नमस्तेगणपतये त्वमेवप्रत्यक्षंब्रह्मासीति । अत्रविशेष्यसंबद्धत्वादन्ययोगव्यवच्छेदकेनैवकारेणपार्थएवधनुर्द्धरइत्य
त्रपार्थादन्यत्रधनुर्द्धरस्येवगणपतेरन्यत्रसाक्षाद्ब्रह्मत्वस्ययोगोव्यवच्छिद्यते । अतःश्रेयस्कामैःसर्वैरपिसएवाराध्यःतत्पूजांविनान्यपूजाया
वैयर्थ्यस्मरणेनफलजनकत्वायोगात् । अवश्यापेक्षितानपेक्षितयोरपेक्षितंसमर्पणीयमितिन्यायेनतदाराधनस्यावश्यकत्वात् । कृतेचत
स्मिन् विद्यार्थीलभतेविद्यांधनार्थीलभतेधनम् ॥ पुत्रार्थीलभतेपुत्रंमोक्षार्थीपरमंपदमित्यादिवचनेभ्यःसर्वेष्टलाभसम्भवे । अनधीतेमहा
भाष्येव्यर्थास्यात्पदमंजरी ॥ अधीतेपिमहाभाष्येव्यर्थास्यात्पदमंजरीतिन्यायेनान्याराधनेप्रयोजनाभावात् । सूर्याद्याराधनफलारोग्या
दिमोक्षांतकथनानंतरंसर्वमिच्छेद्गणाधिपादितिस्मरणमप्यत्रमानं । तस्मादेवब्रह्माद्युत्पत्तिस्ततएवतेषांसृष्ट्यादिसामर्थ्यलाभश्च । अथ
चगणपतेस्तत्वेनवर्णनमुपासनार्थंवास्तवाभेदबोधनार्थंच ॥ नचैवतावतान्यदेवानाराधनापत्तिः । प्रयाजादिषुकृतेषुज्योतिष्टोमादीनामप्य

ननुष्ठानापत्तेः । इतरोपासनाविधायकवाक्याप्रामाण्यापत्तेश्च। सर्वमिच्छेदितितुविनायकाराधनस्यपरंपरयासर्वत्रोपगमोपयोगवर्णनपरं नत्वितरनिषेधपरंतद्विधिविरोधादित्यलमतिप्रयासेन । प्रकृतमनुसरामः । किंभूतंगणेशम् । स्वेननिजेनधाम्नास्मृतिमात्रतोविघ्ननाशकत्वरूपेणप्रभावेणअर्थेषुधर्मादिचतुरर्थेषुसत्यंसत्यतापादकम् । गणेशस्मृतिंविनाधर्मादयोविघ्नैर्नाश्यन्तइतिभावः ॥ पादांबुजध्यानवशेनयस्यविघ्नाश्चधर्मादिषुनोद्विशंति ॥ सिंदूरकांतंगजराजवक्त्रंनमामिलंबोदरमांबिकेयमित्युक्तेः । देवासुरास्तथामर्त्यायत्कुर्वंतिजगत्पते । अनाराध्यगणाध्यक्षंतन्नसिध्यतिकर्हिचिदितिभविष्योक्तेश्च ।यश्चस्वैःगौरीशंकरस्कंदादिभिर्निजैरंकुशाद्यायुधभूषावाहनाद्यैर्वाराजतइतिस्वराट् । एतेनगौर्यादयोपिध्यानविषयाजाताइतिसूचितम् ॥ १ ॥ अथचात्रशास्त्रेसर्वत्रश्रीकृष्णस्यैवतत्तदुपाख्यानमिषेणप्रतिपाद्यत्वादतस्तमपितयानांद्याध्यायति ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वयादितरत श्चाऽर्थेष्व ऽभि ज्ञः स्वराट् तेने ब्रह्म हृदाय आदि कवये मुह्यंति यत्सूरयः ॥ तेजो वा ऽरिमृदां ऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्त कुहकं सत्यं परं धीमहि ॥ २ ॥ ॥ यतयः कृष्णःस्वराट्स्वतएवराजमानःअनन्यापेक्षःआद्यस्यसृष्ट्याद्यादिकारणस्यब्रह्मणः इतरतोऽन्येषांदेवानामर्थेषुतत्प्रार्थनयाजन्माविर्भावमन्वयात् । यतोयस्यहृदायःहृदोरसाऽयतेगच्छतीतिहृदायःकालियःसर्पःआदिपूर्वंसिद्धमेव यथायथावत्ब्रह्मस्तुतिरूपंवेदार्थंतेनेकवयेस्तुतिकर्त्रेकालियायत्रिसर्गःत्रिभिर्गोगोपीगोपैःसर्गःसम्बन्धोस्येतित्रिसर्गः । सर्गःसम्बन्धहानयोरितिहैमः । ज्ञःसर्वज्ञःकृष्णः।वाशब्दश्चार्थेत्र । अभिनभीर्येनतदभितेजःअरिमृद्शत्रुभीतिवारकंआंस्मरणेतेनेचकार । यद्भयात्ससुपर्णस्त्वांनाद्यान्मत्पादलांछितामित्युक्तेः । यत्रश्रीकृष्णेसूरयोविद्वांसोनंदाद्याःविनिमयोविगतोनिमिर्निमेषयोजकोयेभ्यस्तेविनिमयोदेवावत्सादिरूपिणश्चमुह्यंतिमनुष्यदृष्ट्यामोहिताह्यभवन्नित्यर्थः । यश्चसदानिःअनितिचेष्टयतइत्यानिः । अनप्राणनेधातोरिञ् । पालकःसतामानिःपालकस्सदानिः स्वेननिजेनअमृषाधाम्नासत्यतेजसासत्यंअस्तानांदेदीप्यमानानामर्थादेवानांकुहकंविस्मापकं । देवायत्रैवमुह्यंतितत्रान्येषांतुकाकथेतिपुराणात्। असदित्यादावतःक्तःप्रत्ययः । तंपरंसर्वावतारापेक्षयोत्कृष्टतरं।एतेचांशकलाःसर्वेकृष्णस्तुभगवा

न्स्वयमित्युक्तेः । धीमहिध्यायेम । अत्रचसर्वत्रपदावृत्तिपदशेषादिभिर्यथाकथंचिद्योजनयासर्वार्थसिद्धिर्विधेया । विभक्तिवचनलिंगाअपिप रिणमनीयाःअन्यथाभिमतार्थलाभोनस्यात् । तदुक्तंयत्तदोर्नित्यसम्बन्धादेकस्मिन्नश्रुतेपरः ॥ उपतिष्ठेतसर्वत्रवांछितार्थप्रसिद्धये । अ भीष्टान्वयबोधार्थमसकृद्युज्यतेपदम् ॥ विभक्तिलिंगवचनपरिणामेपिजायते ॥ कर्तृकर्मक्रियादीनांयदिसिद्धर्नजायते ॥ अध्याहारं तदाकुर्यान्मुख्यार्थप्रतिपत्तये ॥ यल्लिंगंयद्वचनंयाचविभक्तिर्विशेष्यस्य ॥ तल्लिंगंतद्वचनंसाचविभक्तिर्विशेषणस्यापि ॥ किञ्चयत्रो द्देश्यविधेयत्वंतत्रायंनियमोनहि ॥ रामदाराश्वसीतेयंकरुणाभाजनंहरिः ॥ वसातिर्यस्यवैकुंठोब्राह्मणादैवतंमहदित्याद्युक्तेः । भे द्यभेदकसम्बन्धोलिंगसंख्याविभिन्नयोः ॥ अव्ययानामपितथाभेद्यभेदकताक्वचित् ॥ यथावेदाःप्रमाणचधेनुराहुतिसाधनम् । उच्चैर्भार्या कुलंचोच्चमुच्चैर्देवोमहेश्वरः ॥ द्वयोर्द्वित्वंत्रयाणाश्चत्रित्वमादायधार्यते ॥ द्वित्वात्तथाबहुत्वांताक्रियैकावापृथग्भवेत् ॥ नरोनारायणश्चैवय यतुर्गंधमादनम् ॥ द्वारकामुपसंजग्मुः कृष्णोरामश्चसात्यकिः ॥ परत्रकर्मवशतःसुखदुःखादिसंकुले ॥ जीवोयातिनसंदेहइत्थमूह्यंयथा यथमित्यलंप्रसक्तानुप्रसक्तेन ॥ २ ॥ ॥ अथप्रथमस्कंधदिग्दर्शनम् ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चा ऽर्थेष्व ऽभिज्ञः स्वराट् तेने ब्रह्महृदाय आदिकवये मुह्यंति यत्सूऽरयः ॥ तेजोवा ऽरिमृदां ऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वे- न सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ३ ॥ ॥ यतोऽस्यवासुदेवस्यसकाशाज्जायंतइतिजन्मानोजीवास्तेषामादिकारणंज न्मादिः । छांदसत्वाश्रयणाद्विसर्गलोपशूसंधिश्च ॥ अकारोवासुदेवश्चेत्येकाक्षरे । जन्मादिर्ब्रह्माचपुनर्यतोऽयात्अंवासुदेवंयातिसेवतइ त्ययस्तस्मादर्थाद्ब्रह्मणःसकाशादनुपश्चात्स्वेरेस्वररूपेगांधारादिरूपस्वरव्यंग्येब्रह्मण्याटतिरमतइतिस्वराट्नारदःअभिसंसारभयहरंब्र ह्मजानातीत्यभिज्ञःप्राप्तात्मतत्वोभूदितिशेषः । चपुनःयतोनारदातइंकामंतरतिलंघतइतीतरःशुकस्तंतनोत्युत्पादयतीतीतरतःव्यासः । तनोतेर्डः।ब्रह्मणोवेदस्यहृदभिप्रायभूतंभागवतमयतेजानातीतिब्रह्महृदायोभूत् ॥चपुनर्यतोव्यासात्तथाऽयोवासुदेवभक्तःश्रीशुकःआदिक

१ आङ्पूर्वाद्दटेःक्विप्यद्वाटेर्वेष् ।

वयेपरीक्षितेअरेरज्ञानस्यमृन्मर्दकंज्ञानंतेने।वैयासकिश्चभगवान्वासुदेवपरायणः॥सवैभागवतोराजापांडवेयोमहारथः ॥ इत्युक्तेर्ज्ञानेनवैया
सकिशब्दितेनेत्युक्तेश्च । तेजोवातिप्राप्नोतीतितेजोवावह्निःयत्सूर्यादुत्पादकःससूतस्तस्यपृथुयज्ञेवह्निकुंडोद्भूतत्वात्यथायथावत्आदिकवये
गणमुख्यायशौनकायआंप्रसिद्धमरीणांषण्णामर्थात्प्रश्नानांमर्दयतीतिमृद्उत्तरंतेने।ज्योतिःशास्त्रेरिशब्दःषट्संख्यावाचकःप्रसिद्धः । यत्रये
षुउत्तररूपेष्वर्थेषुविनिमयोविद्वांसोपिमुह्यंति । नहिविद्वांसोपिसर्वउत्तरंदातुंसमर्थाःसंति । भिक्षवःप्रश्नकर्तारोभवंतिचस्थलेंस्थले ॥
दाताचोत्तरदश्चैवविरलोलभ्यतेक्वचिदित्यभियुक्तोक्तेः॥तत्रेतियत्रेत्युक्तेर्लभ्यते । एकसंबंधिज्ञानमपरसबंधिस्मारकमितिन्यायात् । तत्रते
षुत्तरेषुसत्सुत्रिसर्गःत्रिगुणसर्गोऽमृषा ।उत्तरश्रुतेरवाप्ततत्वत्वात् । तस्मादेकेनमनसाभगवान्सात्वतांपतिः ॥ श्रोतव्यइत्याद्युक्त्वातदार
जस्तमोभावाःकामलोभादयश्चये ॥ चेतएतैरनाविद्धंस्थितंसत्वेप्रसीदतीत्युक्तेरजस्तमोरूपाद्विगुणसर्गोमृषाभवति । नतुसत्वसर्गः ।
अतोयुक्तमुक्तंत्रिसर्गोऽमृषेति । स्वानांभक्तानामिनःस्वामीस्वेनोविष्णुस्सद्यतेप्राप्यतेऽनयेतिस्वेनसद्भक्तिः । भक्त्याहमेकयालभ्य
इतिश्रीमुखोक्तेः । तयानिरस्तंकुहकमज्ञानंयेनतं । धाम्नास्वरूपेणसत्यंतंपरंधीमहि । एवंप्रसन्नमनसोभगवद्भक्तियोगतः ॥ भगवत्तत्व
विज्ञानंमुक्तसंगस्यजायतइति ॥ ३ ॥ अथनारदव्यासाख्यानमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चा ऽर्थे ष्वऽभि-
ज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः॥ तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्त
कुहकं सत्यं परं धीमहि ॥ ४ ॥ ॥ यद्येनवासुदेवेनार्थात्यत्कृपयायःस्वराट्स्वरवितनारदइतरतःपूर्वजन्मनिशूद्रोपियतोयेनश्रीभागव
तरूपेणब्रह्मणाद्यस्यब्रह्मणःसकाशाज्जन्मायात्।इतरोधमभिन्नयोरितिव्याडिः। चपुनःअनुपश्चात्कवयेव्यासायमुहिमोहेसातिआदिपूर्वसिद्ध
मेवतद्ब्रह्मवेदरूपंभागवतंतेने । इदंभागवतंनामपुराणंब्रह्मसंमितामित्युक्तेः । ततोनुअभिज्ञःसन्व्यासःअंतिनिकटमेवझटित्येवतेजोवारिमृ
दामेतदुपलक्षितदेहिनामर्थेषुतदभीष्टावाप्तयेस्वेनासाधारणेनधाम्नातेजसानिरस्तानांनाशरहितानांदेवानामपिकुहकंविस्मापकंश्रीभागव
तरूपंतदेवब्रह्मतेने । लोकस्याजानतोविद्वांश्चक्रेसात्वतसंहितामित्युक्तेः । नारदस्यशूद्रजन्माद्यग्रेस्फुटीभविष्याति । अहंपुरातीतभवेभ

वंमुनेर्दास्यास्तुकस्याश्चिद्देदवादिनमित्यादिनाज्ञानंगुह्य मंयत्तत्साक्षाद्भगवतोदितमित्यादिनाच।मरीचिमिश्राऋषयःप्राणेभ्योहंचजज्ञिर
इत्यादिनाच । देवाअपिपरीक्षिन्मोक्षंदृष्ट्वाश्रीमद्भागवतश्रुतेर्विस्मिताबभुवुरितिपाद्मे ॥ चपुनःयद्येनश्रीभागवतेनसूरयःसुवउत्पन्नेरयः
प्रवाहःयत्रयस्मिन्श्रूयमाणेइतिशेषः । त्रिसर्गश्चत्रयाणांशोकमोहभयानांसर्गस्संबंधःमृषाभवति । अंबरीषशुकप्रोक्तंनित्यंभागवतंशृणु । प
ठस्वस्वमुखेनापियदीच्छसिभवक्षयमितिपाद्मोक्तेः । यस्यांवैश्रूयमाणायांकृष्णेपरमपूरुषे । भक्तिरुत्पद्यतेपुंसांशोकमोहभयापहेतिवक्ष्य
माणोक्तेश्च । कथंमृषायथाविनिमयःवीनांपाक्षिणांनिमयःसंगोमृषा । तेषांचांचल्योत्पादकोड्डयनवत्त्वात् । निमयोगतिसंगयोरितिहै
मः । तंपरंसर्वोत्कृष्टंवासुदेवंसदाहृदाधीमहिइहयच्छब्दस्तेनइतिक्रियापदंचावृत्त्यायोज्यम् ॥ ४ ॥ अथपरीक्षिज्जन्मादिप्रसंगमाह ॥
जन्मा ऽऽद्यस्य यतो ऽन्वयादि ऽतरतश्चा ऽर्थे ष्व ऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि
मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वे न सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ५ ॥ ॥ यतोयस्याद्यस्यहरे
रन्वयात्संबंधात्इताप्राप्तारतिरानंदंचैतन्यावाप्तिलक्षणोयेनसइतरतःपरीक्षित्जन्मआयेप्राप । आमभावस्त्वार्षः । सवैद्रौण्यस्त्रविप्लु
ष्टःपुनर्भगवताधृतइत्युक्तेः।अर्थेषुधर्मादिषुअभिज्ञःशुकःयद्यस्मैपरीक्षितेब्रह्महृद्देदाभिप्रायभूतंश्रीभागवतंतेने।किंभूतःशुकःस्वस्मिन्नात्मनि
राजतइतिस्वराट् ॥ स्वसुखनिभृतचेताइत्युक्तेःआदिसनातनंचतत्कंसुखमादिकंतस्यवयोनिस्तारस्तस्मिन्नादिकवयेमोक्षसुखनिमित्तं ।
वयोज्ञानेगतौकांतौविस्तारेखादनेसनइतिकोशात् । ज्ञानेनवैयासकिशब्दितेनभेजेखगेंद्रध्वजपादमूलमित्युक्तेः । त्रयाणांकामक्रोधलो
भानांसर्गस्त्यागोयस्यसत्रिसर्गोयुधिष्ठिरश्चअमृषासत्यंधामस्वरूपंयस्यसोऽमृषाधामाकृष्णस्तेनहेतुनास्वेपदेवैकुण्ठेतेजोनैजंरूपंनिरस्त
कुहकंत्यक्तकल्मषंयथास्यात्तथानावारिकाक्काऽवाप्र्यैवस्वीकारितएव । तस्मिन्नारायणपदेएकांतमतयोगतिम् ॥ अवापुर्दुरवापांतेअस
द्भिर्विषयात्मभिः ॥ विधूतकल्मषाःस्थानेविरजेनात्मनैवहीत्युक्तेः । युधिष्ठिरउपलक्षणमर्जुनादीनामत्र । यत्रपदेमृदांपार्थिवदेहानांयथा
यथावद्विनिमयोव्यत्यासोभवतिप्राप्तवैकुण्ठरूपत्वादितिभावः । वसंतितत्रपुरुषाःसर्वेवैकुण्ठमूर्तयइत्युक्तेः । किंचयत्रहरौसूरयोपिसर्वेश्च

रशक्तिरूपत्वात्सर्वज्ञाअपिसत्यभामाद्यामुह्यंति । तंमेनिरेऽबलामूढाःस्त्रैणंचानुव्रतंरहइत्याद्युक्तेः । तंपरंश्रीकृष्णंसदासत्यंत्रैकालाबाध्यं
ज्ञानांतरेणाविषयासत्यत्वप्रतीतिर्बाधस्तद्योग्योबाध्योनबाध्योऽबाध्यस्तंवयंधीमहि ॥ ६ ॥ यद्वा ॥ ॥ जन्मा ऽऽद्यस्य यतो
ऽन्व ऽयादितरत श्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा वि-
निमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ७ ॥ ॥ मृदांयुद्धानांमहाभारतसंज्ञकानामंतिनि
कटेऽर्थात्तदंतेयतःआत्वासुदेवात् हेतोःपुनर्भगवताघृतइत्युक्तेर्यस्यपरीक्षितःजन्मसस्वराट्चक्रवर्त्तीमुह्यतेऽनेनेतिमुट्शापस्तस्मिन्मुहिस
ति।मुहवैचित्येऽतःकरणेक्विप्। तेजस्तेजास्विनामहमितिश्रीमुखोक्तेस्तेजोविष्णुस्तन्मयंवास्तेजोवास्तस्मिन्श्रीगंगातटे । सामीपिकाधारे
सप्तमी । श्रीगंगाद्रवरूपेणत्रैलोक्यंव्याप्यातिष्ठतीतिसंमोहनोक्तेः । अयात्अगमत् । अनुपश्चात्ब्रह्मणिहृतत्हृदयंयस्यसब्रह्महृत्शुकआ
ये।इतरतइतरेसूरयोविद्वांसःआत्रिर्वसिष्ठश्च्यवनःशरद्वानित्याद्युक्तेः। अयुरगमन्। किंकर्त्तुंयद्यस्मैपरीक्षितेआदिकवयेआदिकविंवर्णयितुं।
तुमोप्रयुक्तस्येतिकर्मणिचतुर्थी । किंचयत्रयस्मिन्परीक्षितिअविनिरक्षकेसतित्रयाणांकामक्रोधलोभानांसर्गःसृष्टिर्यस्मिन्सात्रिसर्गःकलिर्मृ
षासीत् । तावत्कलिर्नप्रभवेत्प्रविष्टोपीहसर्वतः ॥ यावदीशोमहानुर्व्यामाभिमन्यवएकराडित्युक्तेः । किंच पुनःयोऽर्थेष्वभिज्ञःसन् । सर्वेक्ष
यांतानिचयाःपतनांताःसमुच्छ्रयाः॥संयोगाविप्रयोगांतामरणांतंहिजीवनमितिन्यायेननिरस्तःकुहकःकपटोयत्रतंतथा।यथेवार्थे।कृतयुगमे
वतेने। केनस्वेनधाम्नातेजसा। किंभूतःकलिःमीनातिधर्ममितिमयः।मीञ्हिंसायाम्। स्वरांतादः । त्वमधर्मबन्धुरित्युक्तेः॥७॥इतिप्रथमस्क
न्धार्थदिग्दर्शनम् ॥ १ ॥ अथद्वितीयस्कन्धार्थदिग्दर्शनमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्व ऽयादि तरत श्चा ऽर्थे ष्व
ऽभि ज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना
स्वेनसदाऽऽ निरस्तकुहकं सत्यं परं धीमहि ॥ ८ ॥ ॥ यतआद्वासुदेवातयस्यजन्मसब्रह्मायद्वायतआत्द्वैपायनोस्मिव्यासानामि
त्युक्तेर्वासुदेवरूपाद्वैपायनाद्यस्यजन्मसशुकश्चकवयेनारदायपरीक्षितेचआदिसर्वकारणम् । एतन्नानावताराणांनिधानंबीजमव्ययमित्यु

क्तेः ब्रह्मबृहत् विराड्रूपं । विशेषस्तस्यदेहोयंस्थविष्ठश्चस्थवीयसामित्युक्तेः । यथायथावत्तेनेप्रकाशितवान् । यत्रविराजित्रिसर्गस्त्रिलो
कसर्गः । भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकश्चनाभितः ॥ हृदास्वर्लोकइत्याद्युक्तेः । इतरतश्चतुर्दशलोकसर्गश्च । पातालमेतस्यहिपादमू
लमित्याद्युक्तेरमृषासत्यः । यद्वाइतरतःसूक्ष्मरूपंब्रह्मस्थूलरूपंचयत्रविराड्रूपेभगवातिमृषैव । अमुनीभगवद्रूपेमयातेह्यनुवर्णिते ॥ उभेअ
पिन गृह्णंतिमायासृष्टेविपश्चितःइत्युक्तेश्च । किंभूतास्त्रिसर्गःतेजोवारिमृदांविनिमयःकार्यरूपःत्रिवृत्करणश्रुतेःयद्रूपंसूरयोयोगिनोमुह्यंतिध्यायं
तिहृदाज्ञानेनविचारेणेतियावत् । पश्यंत्यदोरूपमदभ्रचक्षुषासहस्रपादोरुभुजाननाद्भुतमित्याद्युक्तेः । धातूनामनेकार्थत्वान्मुहिरत्रध्याने ।
चपुनर्येनधाम्नातेजोरूपेणहरिणास्वेनराजतेकंजोपरीतिस्वराट्ब्रह्मासत्यंब्रह्मलोकस्सनातनइत्युक्तेर्वैकुण्ठलोकमायेप्रापितः । कर्मणिलिट्
अनुतदनंतरंज्ञःसर्वज्ञात् हरेःसब्रह्माअभिसर्वसंसारभीतिहरंश्रीभागवतमयातप्राप । संसारसर्पसंदष्टंविष्णुरातममोचयदित्युक्तेः । तच्छृण्व
न्विपठन्विचारणपरोभक्त्याविमुच्येन्नरइत्युक्तेश्च । किंभूतेनददातिस्वानामभिलषितमितिदास्तेनदा । आतोलोपः । अत्युदारेण । तां
स्तान्कामान्हरिर्दद्याद्यान्यान्कामयतेजनइत्युक्तेः । किंभूतःस्वराट्स्वस्येनःस्वामीस्वेनोहरिस्तंसीदतिगच्छतीतिस्वेनसद्माननामपादांबु
जमस्यविश्वसृगित्युक्तेः । कसत्सुअर्थेषुविश्वसृष्ट्यादिनिमित्तम् । निमित्तेसप्तमी । किंभूतंअभिकोर्थोभागवतंआनिरस्तःकुहकोमोहोयेनतत्त
था । एतन्मतंममातिष्ठपरमेणसमाधिना ॥ भवान्कल्पविकल्पेषुनविमुह्यातिकर्हिचिदित्युक्तेः । तंपरंब्रह्मणोऽप्युपास्यंवासुदेवंधीमहि ।
मतःपरमविज्ञायेत्युक्तेः । यन्मेहृदौत्कंठ्यवताधृतोहरिरितितदुक्तेश्च । सदोतिपदमत्रावृत्त्यावग्रहेणचयोज्यंपक्षे ॥ ८ ॥ इतिद्वितीयस्कंधार्थदिग्दर्श
नम् ॥ २ ॥ अथतृतीयस्कंधार्थदिग्दर्शनमाह । तत्रादौविदुरोद्धवादिप्रसंगमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरत
श्चा ऽर्थे ऽष्वभि ज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये ऽमुह्यंति यत्सूरयः ॥ तेजो वारि मृदां यथा विनिमऽयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ५ ॥ १ ॥ ॥ यतआद्यस्यपरस्यान्वयाद्यदुवंशाद्यतोयस्योद्धवस्यजन्म ।
यतदोर्नित्यसंबंधात्तत्पदमत्रतृतीयांतमध्याहार्यं । तथाचतेनोद्धवेनसाकंब्रह्महृत्परानुरागीमैत्रेयस्तदाविनापाक्षिणागरुडेनमीयतइतिवि

निर्विष्णुस्तंअसददितिसद्प्राप्तवान्। क्विवत्रातीते। विनिरिहौणादिकोडिरनुसंधेयः। यद्यदाऽरिमृदासर्वशत्रुनाशकेनपरेणआदिनैजंतेजआये प्रापि। निजधामगमनावसरेस्वैरायुधैर्मूर्तिधरैराजतइतिस्वराट्। वनमालापरीतांगंमूर्त्तिमद्भिर्निजायुधैः ॥ कृत्वोरौदक्षिणेपादमासीनमित्युक्तेः। वाचार्यो। योज्ञःसर्वज्ञःपरःकवयेमैत्रेयायइतरतइतरस्मैउद्धवायचअर्थेषुविदुरोपदेशानिमित्तं। तस्यानुरक्तस्यमुनेर्मुकुंदःप्रमोदभावानतकंधरस्य । आशृण्वतोमामनुरागहाससमीक्षयाविश्रमयन्नुवाचेत्युक्तेः। अभिभीनिवर्तकंआनिरस्तंकुहकंसंसृतिलक्षणंयत्रतज्ज्ञानंयथात्रिसर्गोमृषास्यात्तथातेने । सएषसाधोचरमोभवानामित्याद्युक्तेः। यत्रज्ञानेभागवतलक्षणेसूरयोविद्वांसःअमुह्यंतिनमुह्यंति। अकारोत्रप्रतिषेधार्थकोज्ञेयः। अमानोनाःप्रतिषेधइत्युक्तेः । किन्तुयत्सूरयोभागवतंवदंतीत्युक्तेर्जानंत्येवविनाज्ञानंकथनासंभूतेः। किंभूतोज्ञःअयःशुभावहः। भक्तलोकशिवंकरइतिशिवोक्तेः। स्वेनधाम्नातेजसासत्यंअलौकिकनिजप्रभावेणसर्वदैकरसंतंपरंवासुदेवंधीमहि ॥ ९ ॥ १ ॥ अथ विदुरोपदेशादिप्रसंगंहिरण्याक्षवधंचाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १० ॥ २ ॥ ॥ यतःपरस्यान्वयात्। श्रीगंगाद्रवरूपेगत्रैलोक्यंव्याप्यातिष्ठतीतिसंमोहनोक्तेः । गंगारूपहरेःसंबंधात्। द्वारिद्युनद्याऋषभःकुरूणांमैत्रेयमासीनमकुंठबोधमित्युक्तेः । श्रीगंगायाब्रह्मद्रवत्वंतुनारदगानश्रुतेर्यथाजातंतथागर्गसंहितातोऽवसेयम् । इतरतोविरक्तोपिअभिज्ञोमैत्रेयःआदिंश्रीकृष्णंकौतिस्तौतीत्यादिकविर्विदुरस्तस्मैयथायथावत्ब्रह्मज्ञानंतेने । चपुनःस्वानांभक्तानामिनःस्वेनोहरिःससीदतितिष्ठत्यत्रेतिस्वेनसद्तेने । धाम्नावैकुंठेनसहजन्मनाद्यस्य। हिरण्याक्षस्यप्रजापतिर्नामतयोरकार्षीदित्यारभ्ययंतंहिरण्याक्षमसूतसाग्रतइत्यंतोक्तेःवैकुंठवर्णनपूर्वकंवारिप्रलयजलेमृदांमर्दनंतेनेप्रकाशितवान् । अर्थेषुभूस्थापनार्थं । निमित्तेसप्तमी । व्यभादिलायामिवशुष्मिणोमृधइत्याद्युक्तेः । यत्रमृदायांसत्यांअजोब्रह्मातेप्रसिद्धाःसूरयोदेवामुह्यंति आनंदविवशाः। प्रशशंसुःअहोइमांकोनुलभेतसंस्थामित्युक्तेः । यद्यथामृदयात्रयाणांधर्मव्यासदासीनांसर्गःसंतातिरर्थाद्विदुरःहृदाचेतसास्वमात्मानंराजयतिद्योतयतीतिस्वराट्सं

तोषमायेप्रापितः । क्षीबेद्धितीयांतंस्वराडिति।इतिकौषारवाख्यातामाश्रुत्यभगवत्कथाम् ॥ क्षत्तानंदंपरंलेभेइत्युक्तेः । किंभूतास्त्रिसर्गःनमृ
ष्यतियुधिष्ठिरैश्वर्यमित्यमृट्। योनसेहेश्रियंस्फीतांदृष्ट्वापाण्डुसुतस्यतामित्युक्तेर्दुर्योधनस्तेनविनिमयःव्यत्यस्तःअसत्कृतः। सत्स्पृहणीय
शीलःक्षत्तेत्युक्तेः । प्राचुर्य्येऽसत्कृतौचाथरचनासंगयोःस्मृतः ॥ शब्दोविनिमयोवैपरीत्येखगमवाहनइत्यभिधानचिंतामणेः । निरस्तकु
हकंसर्वपापनाशकंतंपरंसत्यंसतांगम्यंधीमहि । सतःप्राप्त्यर्थंयत् ॥ १० ॥२ ॥ अथमनुचरितमाह ॥ जन्मा ऽऽद्यस्य यतो ऽन्व ऽया-
दि ऽतरतश्चा ऽर्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना
स्वेन सदा निरस्त कुहकं सत्यं परं धीमहि ॥ ११ ॥ ३ ॥ ॥ यतोयस्यमनोःस्वायंभुवस्याद्यस्यब्रह्मणोजन्मततास्त्रिसर्गःतिसृणामाकूत्या
दीनांसर्गःसाष्टिःइतरान्देवमनुष्यादींस्तेने ।तिस्रःकन्याश्चजज्ञिरे । आकूतिर्देवहूतिश्चप्रसूतिरितिसत्तमेत्युक्तेर्यतआपूरितंजगदित्युक्तेश्च ।
अनुपश्चात्समनुरादिकवये ।एकत्वंसामान्याभिप्रायं। भृग्वादिभ्यःअर्थेषुवर्णाश्रमादिधर्मेष्वभिज्ञःब्रह्मणोवेदस्यहृत्तात्पर्यंयथायथावत्तेने ।
यन्मनुरवदत्तद्भेषजमितिश्रुतेः । यःपृष्टोमुनिभिःप्राहधर्मान्नानाविधान्नृप ॥ नृणांवर्णाश्रमाणांचेत्युक्तेश्च ॥ यत्रयेष्वर्थेषुसूरयोपिमुह्यंतिअ
तिगहनाभिप्रायत्वात्तान्वक्तुंनोत्सहंतइत्यर्थः ।किंचअंवासुदेवंयातिभजतीत्ययस्सएवायः । स्वार्थिकोऽणत्र । तस्मिन्नायेवासुदेवभक्तेतेजो
वारिमृदांरजस्सत्वतमसांविनिमयोव्यत्यासरूपोजाग्रदादित्रयमाध्यात्मिकादित्रयंचमृषा । सत्वाज्जागरणंविंद्याद्रजसास्वप्नमादिशेत् ॥ प्र
स्वापंतमसाजंतोरित्युक्तेः। वासुदेवप्रसंगेनपरिभूतगतित्रयइत्युक्तेश्च ।अध्यात्ममिंद्रियगणास्तद्देवाआधिदैवतम् । अधिभूतंचरूपादिगु
णत्रयसमुद्भवमित्युक्तेः।अध्यात्माद्यपिगुणत्रयकार्यमेव । सस्वराट्मनुर्दाःअत्युदारःस्वेनधाम्नादेहेनसहनिरस्तकुत्यक्तभूमंडलंयथास्यात्तथा
हस्फुटंयद्यंसत्यंकंसुखरूपंहरिमयात्तंपरंधीमहि ॥११॥३॥ ॥ अथकपिलाख्यानमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरत श्चा ऽर्थे
ष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन
सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२ ॥ ४ ॥ ॥ यतोयस्यकर्दमस्याद्यस्यब्रह्मणःसकाशाज्जन्म । छायायाःकर्दमोजज्ञेइत्युक्तेः ।

यद्वायस्यादेवहूत्याआद्यस्यादिमनोःस्वायंभुवस्यसकाशाज्जन्मयच्छब्दोक्तेस्तच्छब्दोपलब्धिः।तच्छब्देनतुयच्छब्दोबोद्धव्यःसततंबुधैः
॥ उदाहृतेतुयच्छब्देतच्छब्दःस्यादुदाहृतइतिहलायुधोक्तेः।अर्थेषुकवयेधर्मादिषुविचारवते । कविशब्दोत्रस्त्रीलिंगोपिबोध्यः । तथाच त
स्मैतस्यैचइतरतइतरेभ्यश्चऋषिभ्यःयोऽभिज्ञःकपिलरूपःपरःहृदाप्रीत्याआदिप्राक्सिद्धमेवकालवशोच्छिन्नं । एषआत्मपथोव्यक्तो
नष्टःकालेनभूयसा ॥ तंप्रवर्तयितुंदेहमिमंविद्धिमयाभृतमित्युक्तेः । ब्रह्मज्ञानसाधनंसांख्यंयोगंचततेने । ऋषीणांश्रोतुकामानांयमवोचंपुरान
घ ॥ तमेनंतेप्रवक्ष्यामियोगंसर्वांगनैपुणमितिपरोक्तेः । मामात्मानंस्वयंज्योतिःसर्वभूतगुहाशयम् ॥ आत्मन्येवात्मनावीक्ष्येतिपितरमु
क्त्वामात्रआध्यात्मिकींविद्यामितिपुनस्तत्रैवपरोक्तेश्च । किंचानुतदनंतरंयस्यकपिलस्यसूरुत्पादकोयत्सूर्मातापिताचअयःशुभावहंमोक्ष
रूपंतेजोऽयात् । मोक्षस्यतेजस्त्वंतेजोमयब्रह्मावाप्तिरूपत्वात् । अयशब्दोविभक्तिविपर्यासेनात्रयोज्यः।यत्रसांख्येयथाऽविनिमयोविकारा
दिशून्यःपुरुषःअमृषासत्यःतथात्रिसर्गःत्रिगुणात्मिकाप्रकृतिरप्यमृषासत्या । प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपीतिद्वयोरनादित्वोक्तेः ।
अनादिभावस्यतुसदासत्यत्वमेवसांख्यमते प्रकृतिपुरुषान्यतरख्यातेरेवमोक्षः । नतुसर्वथाप्रकृतेर्नाशोस्ति । तिरोभावित्रीशनकैरित्यु
क्तेश्च । तत्तिरोधानमेवमोक्षफलंतिरोधानंनामस्वकार्यासामर्थ्यं । तदुक्तं प्रकृतिर्नापकुरुतेआत्मारामस्यकर्हिचिदिति । भुक्तभोगापरि
त्यक्तादृष्टदोषाचानित्यशः ॥ नेश्वरस्याशुभंधत्तेस्वेमहिम्निस्थितस्यचेति । किंच यःवारिणःसमुद्रस्यमृदांभुवांधाम्नास्थानेनस्वराट्स्वतः
प्रकाशमानःसमुद्रेणदत्तार्हणानिकेतनइत्युक्तेः । स्वंनिजद्रव्यंसांख्यंतस्येनाःसूर्यवत्प्रकाशकाआचार्याःस्वेनास्तेसीदांतितिष्ठंत्यत्रेतिस्वेन
सत्तेनतथा । सांख्याचार्यैरभिष्टुतइत्युक्तेः । धाम्नेतिपदविशेषणमिदम् । मुह्यतिसर्वोऽनयेतिमुहीप्रकृतिः । करणेटोत्र । तस्याअंतोमुह्यंतः
सोस्त्यस्यतन्मुह्यंति । इनत्रास्त्यर्थे।ब्रह्मपदविशेषणमिदम् । अत्रांतपदंतिरोधानपरं । निरस्ताःकुहकालोकोपद्रवकर्त्तारःसगरात्मजाये
नतंसत्यंसत्यरूपंपरंधीमहि ॥ निरस्तेत्यादिनाभाविकपिलकर्मसूचितम् ॥ १२ । ४ ॥ इतितृतीयस्कंधार्थदिग्दर्शनम् ॥ ३ ॥ अथच
तुर्थस्कंधार्थदिग्दर्शनमाह । तत्रकर्दमपुत्रीसंततिप्रसंगगतमत्रिचरितंदक्षकन्यासंततिमध्यतानरनारायणचरितंचाह॥ ॥ जन्माद्यस्य

यतो ऽन्वयादि तरत श्चा ऽर्थे ष्वऽभि ज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजोवारिमृदां यथा विनि
मयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा ऽऽनिरस्तकुहकं सत्यं परं धीमहि ॥ १३ ॥ १ ॥ ॥ यतोयस्यात्रेराद्यस्यब्रह्मणःसकाशा
ज्जन्मासीत् । अक्ष्णोत्रिरित्युक्तेः । अनुतस्मात्यःस्वराट् परःत्रिसर्गोभूत् । त्रयःसर्गादेहादत्तसोमदुर्वासोरूपायस्यसंतथा । यत्रत्रिसर्गेब्र
ह्मादिरूपेबुधामृषामुह्यंति । यद्वैध्यायतितेवयमितिश्रीमुखोक्तेर्भेदनिरासात् । अनुपश्चात्यत्सूर्यत्पिताऽयःधर्मः । अयःशुभावहोविधिरि
त्युक्तेर्धर्मस्यैवशुभावहत्वादयत्वमस्ति । धर्मस्यदक्षदुहितर्यजनिष्टदेवोनारायणोनरइत्युक्तेः । अर्थेषुइतरतोविरक्तःसस्वराट्नरनारायण
रूपःपरःदाःसर्वफलदःकवयेनारदायआदिसर्दकारणंसत्यमबाध्यंब्रह्मतेनेप्रकाशितवान् । एतच्चवेदस्ततौश्चदिशमेस्फुटंभावि । चपुनःय
तोयस्यज्ञःसर्वज्ञस्यस्वेननिजेनधाम्नादेहेनतेजोवारिमृदांविनिमयोव्यत्यासरूपस्त्रिलोकोहृदामनसानभीर्येनतदभिसुखमयात् । ययोर्जन्म
न्यदोविश्वमभ्यनंदत्सुनिर्वृतामित्युक्तेः । निरस्ताःकुहकाइंद्रप्रेषिताःकामाद्यायेनसतथातं । इंद्रोविशंक्यममधामजिघृक्षतीतिकामंन्ययुंक्त
सगणमित्युक्तेः । तंपरंधीमहि ॥ १३ ॥ १ ॥ अथदक्षयज्ञलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्व ऽयादि तरतश्चा ऽर्थे ष्वऽ
भिज्ञः स्वराट् तेने ऽब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेऽजोऽवारि मृदां यथा विनिमयो यत्रऽत्रिसर्गो मृषा धाम्ना
स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १४ ॥ २ ॥ यत्सूर्यस्याःसूरुत्पादकोदक्षःअयादितेनेचकार । अयस्यशुभावहविधेरादिकार
णंयज्ञकर्मेत्यर्थः । सासतीआद्यस्यजंगमापेक्षयाप्रथमस्याहिमाद्रेःस्थावरस्यसकाशाज्जन्मायात् । जज्ञेहिमवतःक्षेत्रेमेनायामित्युक्तेः । किं
कर्तुंतेनेआदिकवये ॰ ।दिकविंश्रीमहादेवंद्वेष्टुं । तुमर्थाच्चेतिचतुर्थी । आदिकविरित्युपलक्षणं । ब्रह्मिष्ठानभिभूयच । बृहस्पतिसवंनामसमा
रेभेक्रतूत्तममित्युक्तेः । विगतोनिमिर्येभ्यस्तेविनिमयोऽधाःअर्थेषुकर्त्तव्यार्थेषुमुह्यंति । कुतोधामुह्यंतितितीर्य्यतेह्रूयतेऽनेनेतितरःआभि
जनधनविद्यादिजोमदस्तस्मात् । पञ्चम्यर्थेतासिः । विद्यातपोवित्तवपुर्वयःकुलैःसतांगुणैःषड्भिरसत्तमेतरैः ॥ स्मृतौहतायां भृतमानदुर्दृ
शःस्तब्धानपश्यंतिहधामभूयसामित्युक्तेः । यथातेप्रसिद्धाअंधाअप्यतइत्ययः । अयगतावतोऽसुप्रत्ययस्तदंतंप्रायःक्लीबे।अयोमार्गंप्रतिमु

ह्यंतितथातरतोंधाअपिमुह्यंतीतिभावः । योदक्षःअब्रह्महृत्शिवद्वेषीस्वेनसदारुद्रेणमृदांमृत्युमवारिप्रापितः । णिजंताद्वृणोतेःकर्मणिचि
ण् । स्वानांधनानामिनःस्वामीकुबेरःस्वेनस्तेनसह्यतेसेव्यतेइतिस्वेनसत्तेनतथामृदा ॥ इहभागुरिमतेटाप् । आंप्रसिद्धौअनुतदनंत
रंयत्रात्रेःसर्गोऽत्रिसर्गश्चंद्रोऽमृषासत्यःचंद्रशेखरइत्यर्थः । अत्राकारलोपस्त्वार्षः । तस्यधाम्नातेजसाऽभितोज्ञापयतिनियोजयतिस्वेतर
प्रजापतीनित्यभिज्ञःसर्वनियोक्तादक्षः । युयुजेन्यांश्चसवैसर्वप्रजापतीनित्युक्तेः । ज्ञानियोगेचौरादिकस्ततोडः । अजोऽजमुखोभूत् । दक्षो
बस्तमुखोचिरादित्युक्तेः । मुखमर्द्धंशरीरस्यसर्वंवामुखमुच्यतइतिकामंदकोक्तेरजमुखेजशब्दप्रयोगोनविरुद्धः । किंचयतोयस्मैदक्षाययः
स्वराट्विष्णुःपरंसर्वश्रेयस्करापेक्षयोत्कृष्टंज्ञानंचतेने । श्रेयसामिहसर्वेषांज्ञानंनिःश्रेयसंपरमित्युक्तेः । निरस्तःकुहकोभेदोयेनतत्तथा ।
त्रयाणामेकभावानांयोनपश्यतिवैभिदाम् ॥ सर्वभूतात्मनांब्रह्मन्सशांतिमधिगच्छतीत्युक्तेः। तमंवासुदेवंधीमाहि। यस्तेनइतिपदद्वयमावृ
त्त्यायोजनीयम् ॥ १४ ॥ २ ॥ अथध्रुवलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वऽयादि तरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेने ब्रह्म
हृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं
धीमहि ॥ १९ ॥ ३ ॥ यत्सूर्यन्माताऽयःअयशब्दार्थोपलक्षितासुनीतिः । सुनीतेरेवशुभावहत्वात् । यस्ययस्मै । चतुर्थ्यर्थेषष्ठी। स्वरा
ट्नारदःमनुर्वायथायथावत्जन्मात्तिनाशयतीतिजन्मात्ज्ञानंभगवद्भक्तिलक्षणंतेने।भगवान्वासुदेवस्तं भजतत्प्रवणात्मनेत्यादिनारदोक्तेः।
त्वंप्रत्यगात्मनितदाभगवत्यनंतेआनंदमात्रउपपन्नसमस्तशक्तौ ॥ भक्तिंविधायपरमांशनकैरविद्याग्रंथिंविभेत्स्यासिममाहमितिप्ररूढ
मितिमनूक्तेश्च। ब्रह्मणिहृन्मनोयस्यतेनध्रुवेणतेजःसूर्यस्तत्संबंधिवारितेजोवारियमुनातटमर्थान्मधुवनं । तत्तातगच्छभद्रंतेयमुनायास्तटं
शुचि ॥ पुण्यंमधुवनंयत्रसांनिध्यंनित्यदाहरेरित्युक्तेः । आदिकवयेश्रीहरिमाराधयितुमायेप्रापि । चपुनःअर्थेषुभ्रातृवधप्रतीकारार्थंस्वेनः
श्रीदःसीदतितिष्ठत्यत्रेतिस्वेनसदाऽलकापूःआये । ध्रुवोभ्रातृवधंश्रुत्वाकोपामर्षशुचान्वितः ॥ जैत्रंस्यंदनमास्थायगतःपुण्यजनालयमि
त्युक्तेः । इतरतइतरेषामर्थाद्यक्षाणांधाम्नानिजतेजसामृदांचतेने । इहापितेनइतिक्रियापदंयोज्यम् । येनपुण्यजनानेतानवधीरित्युक्तेः ।

यत्रमृदायांयेविनिमयऋषयस्तेपिमुह्यंति । निशाम्यतस्यमुनयःसमाशंसन्समागताइत्युक्तेः। चपुनःयोध्रुवःज्ञःसर्वज्ञातहरेःअभिभयनिव
र्तकंनिरस्तकुहकंदुर्जनगतिशून्यं। यन्नाव्रजन्जंतुषुयेननुग्रहाइत्युक्तेः । लोकंविष्णुपदसंज्ञमयात । अनुयतोयस्यध्रुवस्यहरेःकथयेतिशेषः ।
त्रिसर्गोदेहोऽमृषासत्योभूदितिशेषः । ययोत्तानपदःपुत्रोमुनिनागीतयार्भकः ॥ मृत्योर्मूर्ध्निपदंदत्वाह्यारुरोहहरेःपदमित्युक्तेः । तंपरंसत्यं
धीमहि ॥ १९ ॥ ३ ॥ ॥ अथपृथुचरितमाह ॥ जन्माद्यऽस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञःस्वराट् तेने ब्रह्म हृदा य
आदिकवये मुह्यंति यत्सूरऽयः ॥ ते ऽजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं
धीमहि ॥ १६ ॥ ४ ॥ यस्यवेनस्यसूःपिताऽयोंगःब्रह्मयज्ञंतेने । यत्रयज्ञेविनिमयोदेवानाजग्मुरितिशेषः । अंगोश्वमेधंराजर्षिराजहारम
हाक्रतुम् ॥ नागच्छंत्याहुतायत्रयेदेवाःकर्मसाक्षिणइत्युक्तेः । अंवासुदेवंगच्छत्यभिमतावाप्त्यर्थमित्यंगः । अत्रविभक्तेरलुक् । अंवासुदेवं
यातीत्ययःइत्थमङ्गायशब्दावेकार्थकत्वात्पर्यायावेवगणेशगणपशब्दवत । यतोयस्यचपृथोर्जन्मनआदिकारणंपिताअभितोज्ञपयतिमा
रयतिजीवानित्यभिज्ञःवेनः । मारणतोषणनिशामनेषुज्ञाधातोर्मित्त्वविधेर्मारणार्थतात्रबोध्या । हंत्यसाधुर्मृगानदीनान्वेनोसावित्यरौज्ज
नइत्युक्तेः । सचपृथुश्चब्रह्मयज्ञंतेने । यत्रब्रह्मणियज्ञेस्वराडिन्द्रःअन्वयातमुहुर्मुहुःप्राप । आदेर्वेदात्कंसुखमादिकंतदध्ययनाध्यापनतद्भय
कर्मजंसुखंतद्वातिहिनस्तीत्यादिकविःपाखडंः तस्माआदिकवयेपाखंडंप्रवर्त्तयितुं । एभिरिन्द्रोपसंसृष्टैःपाखंडैरित्याद्युक्तेः । पालनात्सर्व
धर्माणांपाशब्देनत्रयीमता॥तांखंडयतियोमोहात्पाखंडःसप्रकीर्तितइत्युक्तेः।किञ्चयत्रपाखंडेतेप्रसिद्धालोकामुह्यंतिधर्मोयामितिबुद्धिंकुर्वंति
धर्मइत्युपधर्मेषुनग्नरक्तपटादिषु॥ प्रायेणसज्जतेभ्रांत्यापेशलेषुचवाग्मिष्वित्युक्तेः । किंचात्रिशब्देनात्रिविष्टपःस्वर्गोग्राह्योनामैकदेशोच्चारणेन
सर्वनाम्नोग्रहणंभवातियथाभीमोच्चारणेभीमसेनग्रहणमिति । तेनत्रिविष्टपेसर्गःसंबंधोयस्यसात्रिसर्गः । यद्वात्रिभिःकामवसंताप्सरोरूपैर्गणैः
सर्गस्तपोविघातार्थंप्रेषणसंबंधोयस्यसत्रिसर्गइन्द्रः। त्रीत्युपलक्षणंमदादे । तदुक्तंमधुर्मदोरजस्तोकोवसंतमलयानिलौ ॥ तेवैतदाश्रमंज
ग्मुरिति । ओवासुदेवःस्वंधनंयस्यसोऽस्वः । भवानहिभगवत्परइत्युक्तेः । तेनहरिभक्तेनपृथुनाओवासुदेवस्तेनमृष्यंतेसह्यंतेइत्यमृषा

विप्राः । विप्रांस्तुकोनुविषहेतेत्युक्तेः भृगुपादताडनेनप्रसिद्धमेतत । अमृषाणामाधाम्नाईषत्तेजसामृदांमर्दनंतिरस्कारमवारिप्रापितः ।
अयातयामोपहवैर्जुहुवामस्तवाहितामित्यादिविप्रोक्तेः । किंचार्थेषुविषयेषुइतरतःसनत्कुमारस्तद्रूपोयोजःपरहृदाप्रीत्याऽस्यास्मैनिरस्तः
कुहकोभगवद्द्वेषलक्षणःकपटोयस्मिंस्तद्धरिभक्तिशोभिज्ञानंचतेनेतंपरंसदासत्यंधीमाहि । तत्त्वंहरेर्भगवतोभजनीयमंघ्रिंकृत्वोडुपंव्यसनमु
त्तरदुस्तरार्णमित्युक्तेः । अत्रत्यदादीनांबुद्धिस्थपरामर्शकत्वादस्मैपृथवइतिबोध्यं । अस्येतिचतुर्थ्यर्थेषष्ठी । अत्रयत्रतेनेब्रह्मेत्यादिपदानामा
वृत्त्यासंबंधः ॥ १६ ॥ ४ ॥ अथप्राचीनबर्हिषःप्रचेतसांचलीलामाह ॥ जन्माऽऽद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेने
ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धी
महि ॥ १७ ॥ । ६ ॥ पृथुराद्यःक्षितीश्वरइत्युक्तेराद्यस्या । दिराजस्यपृथोरन्वयाद्वंशाद्यतोयस्यबर्हिषदोजन्माभूत्तस्माआदिकवयेऽका
रादिकवयेऽकवयेमूर्खायस्वराड्नारदोब्रह्मज्ञानंतथापुरंजनोपाख्यानरूपेणतेने । यथार्थेषुनारदोक्तपदार्थेषुसूरयस्तत्वज्ञानमुह्यंतिकिंतुकर्मि
णएवमुह्यंति । कवयस्तद्विजानंतिनवयंकर्ममोहिताइत्युक्तेः । येतस्यहृदाहृदयादासन्प्रचेतसस्तत्पुत्राःहृदयादभिजायतइतिश्रुतेः । ते
भ्योनिरस्तःकुहकस्संसारोयेनतंभक्तियोगंतेने । जरयत्याशुयाकोशंनिगीर्णमनलोयथेत्युक्तेःहरिंविनानैवसृतिंतरंतीतिस्वाम्युक्तेश्च । यंभ
क्तियोगंविनात्रिसर्गःशौक्लादिरूपोमृषाऽकिंचित्करएवइतरतइतरत्वैदिककर्माद्यपिमृषैव । किंजन्मभिस्त्रिभिश्चेहशौक्लसावित्रयाज्ञिकैः ॥ कर्म
भिर्वात्रयीप्रोक्तैर्नयत्रात्मप्रदोहरिरित्युक्तेः । यंविनेतिशेषः । किंचयद्येभ्यःत्रयाणांनेत्राणांसर्गोरुद्रःतेजोवारितेजःशब्दोदितास्तेजोवंतो
हीरकमुक्ताद्यास्तैर्युक्तंवार्जलंयस्यसतेजोवाःसमुद्रःयद्वातेजश्चांद्रंतेजस्तदुत्पादकंवार्यस्यसतथा । मध्यमपदलोपिसमासः । यद्वातेजऔ
र्वाग्निस्तद्युतंवार्यस्यसतथातास्मिंस्तथातत्समीपेमृदांसंसृतिमर्दकांभक्तिमेवतेने । जितंतआत्मविद्धुर्येत्यारभ्यकस्त्वत्पदाब्जंविजहाति
पंडितइत्युपसंहाराच्च । योज्ञःसर्वज्ञःहरिस्सोपियेभ्योऽभिभयनिवर्तकंभक्तिलक्षणंज्ञानमेवतेने । नव्यवद्धृदयेयज्ज्ञोब्रह्मैतद्ब्रह्मवादिभिः ॥
नमुह्यंतिनशोचंतिनहृष्यंतियतोगताइत्युक्तेः । यत्रहरावविनिमयोविनिमयोविकारस्तदभावोस्तिनिर्विकारंनिरंजनमित्याद्युक्तेः ।

तंपरंसत्यंसदाधीमाहि । अत्रापितेनइत्यादिपदावृत्तितोन्वयः ॥ १७ ॥ ९ ॥ इतिचतुर्थस्कंधार्थदिग्दर्शनम् ॥ ४ ॥ अथपंचमस्कंधार्थदिग्दर्शनमाह ॥ तत्रादौप्रियव्रतचरितमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमऽयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमाहि ॥ १८ ॥ १ ॥ आद्यस्यादिमनोःस्वायंभुवस्यसकाशाद्यतोयस्यप्रियव्रतस्यजन्मासीत्सवारिमृदांवारीणांवारिशब्दोदितानांसमुद्राणांमृदांभूप्रदेशानांद्वीपादीनांयथायथावत्विनिंरचनांतेने । भूसंस्थानंकृतंयेनसरिद्गिरिवनादिभिरित्युक्तेः । विनिःस्याद्रचनायांस्त्रीति कोशात् । अर्थेषुलोकानिवासादिरूपेषुसत्सुयश्च।प्रियव्रतःधाम्नातेजस्विनारथेनतेजःसूर्यमन्वयात् । ज्योतिर्मयेनरथेनससप्तकृत्वस्तरणिमनुपर्याक्रमदित्युक्तेः। आदीनांजीवानांकवयेसुखविस्तारार्थं । निमित्तेसप्तमी।यत्रसूर्यानुगमनेसूरयोऽपिमुह्यंतिकथमनेनैतत्कर्मकृतमितिमोहिताभवंति । तद्वारणार्थमाह । किंभूतःसःअंवासुदेवंयात्याराधयतीत्ययः । नैवंविधःपुरुषकारउरुक्रमस्यपुंसामित्याद्युक्तेः । पुनःदाःअत्युदारःपालकश्चअभिज्ञःज्ञातभगवत्स्वरूपः । किंचयस्मैप्रियव्रतायस्वराट्नारदोब्रह्मज्ञानश्चतेने । देहलीदीपकन्यायेनोभयत्रक्रियासंबंधः। यश्चइतरतोविरक्तःसन्निरस्तकुत्यक्तभूमण्डलंयथास्यात्तथायंकंसुखरूपंपरंहंहर्षेपुनरन्वयात्अनुजगाम । यत्रपरेत्रिसर्गोब्रह्मादित्रयभेदोमृषैवनवस्तुतःसन्। हरिर्ब्रह्माहरोदेवोयत्रैतन्नामम त्रतः॥भेदोस्तिवास्तवोभेदोनैवजायेतचिन्मयइत्यभियुक्तोक्तेः।तंपरंसत्यंसदासर्वदास्वेननिजेनहृदामनसाधीमहि।इमांयथादायंविभज्यस्वयंनिहतनिर्वेदो।हृदिगृहीतहरिविहारानुभावोभवगतोनारदस्यपदवींपुनरेवानुससारेति। इहयतइत्यव्ययपदंस्वेच्छयापरिणमायितव्यं तत्पौनःपुन्यसंबंधद्योतकश्चशब्दोप्यस्त्यत्रेति ॥ १८ ॥ १ ॥ अथाग्नीध्रचरितमाह ॥ ॥ जन्माद्य ऽस्य यतो ऽन्वयादितरतश्चाऽर्थेऽष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजो वारिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमाहि ॥ १९ ॥ २ ॥ ॥ यस्मात्प्रियव्रतात्सूतेजायतइतियत्सूः आग्नीध्रःब्रह्मतपस्तेने अर्थेषुसंतत्यर्थं । संततेर्बहुकार्यकरत्वेनपूज्यत्वात्पूजायांबहुत्वमर्थेष्विति । किंकर्तुंआदिकवयेब्रह्माणमाराधयितुं।

सकदाचित्पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यांभगवंतंविश्वसृजांपतिमित्यारभ्यतपस्व्याराधयांबभूवेत्युक्तेः । अभिज्ञस्तदभिप्रा
यज्ञः स्वराट्ब्रह्माअप्सुजलेषुसरतीत्यप्सराः एवंवारिजलंमृद्गातिस्वगत्येतिवारिमृदाअनयोरेकार्थत्वात्पर्यायत्वं । स्वरूपभिन्नत्वेसत्येकार्थबो
धकत्वंपर्यायत्वमितितल्लक्षणयोगात् । तथाचवारिमृदांपूर्वचित्तिंनामाप्सरसमन्वयात्प्रेषयामास । धातूनामनेकार्थत्वादनुपूर्वयातेरुपसर्ग
वशाद्वाप्रेषणार्थता । तदुक्तंधात्वर्थंबाधतेकश्चित्कश्चित्तमनुवर्तते ॥ विशिनष्टितमेवार्थमुपसर्गगतिस्त्रिधा ॥ १ ॥ किंच उपसर्गेणधात्वर्थो
बलादन्यत्रनीयते ॥ विहाराहारसंहारप्रतीहारप्रहारवदिति ॥ २॥ तदुपलभ्यभगवानादिपुरुषः सदासिगायंतींपूर्वचित्तिंनामाप्सरसमभिया
पयामासेत्युक्तेः । यतोयस्यामप्सरसिअस्याग्नीध्रस्यहृदाहृदयादितरतइतरेनाभ्यादयोनवपुत्राबभूवुः । तस्यामुहवावात्मजान्सराजर्षिवर
आग्नीध्रः नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वसंज्ञान्नवपुत्रानजनयदित्युक्तेः । यश्चस्वेनधाम्नादेहेनमुहिमोहेसातिरमाग्निंया
तिजुहोतीतिरयः यज्वासन्निरस्तकुत्यक्तभूमण्डलंयथातथाहहर्षेअंतिपूर्वचित्तिसमीपेकंस्वर्गसुखमायेप्राप । आग्नीध्रोराजाऽतृप्तः कामाना
मप्सर ·मेवानुदिनमधिमन्यमानस्तस्याः सलोकतांश्रुतिभिरेवावरुंद्धेयत्रपितरोमादयंतइतिवाक्यात् । यत्रस्वर्गलोकेत्रिसर्गोदेहोऽर्थात्पां
चभौतिकोमृषादिव्यदेहोपलब्धेः । किंचयोऽविनिमयः सर्वविकारशून्योहारर्जन्मात्तीतिजन्मादि । अत्तेरिञ् । जन्मानिवर्त्तकंतेजस्ते
जोरूप·ह्मावाप्तिकरंज्ञानंतस्मैअदात्तंसदासत्यंपरंधीमाहि ॥ तस्माअदादितिशेषः । हरिणातस्मैपितृलोकतः समागतायविरक्तीभूता
यज्ञानमदायीतिपुराणांतरादवसेयम् ॥ १९ ॥ २ ॥ अथनाभिचरितमाह ॥ ॥ जन्माऽद्यस्य यतो ऽन्वयादि तरतश्चा
ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमाहि ॥ २० ॥ ३ ॥ ॥ अर्थेष्वभिज्ञः कर्त्तव्येषुनिपुणः योनाभिर्यथायथावत् ब्रह्मय
ज्ञंतेनेआदिकवयेश्रीविष्णुमाराधयितुम् । नाभिरपत्यकामोऽप्रजयामेरुदेव्याभगवंतंयज्ञपुरुषमवहितात्मायजदित्युक्तेः । यत्रत्रयाणां
गार्हपत्याहवनीयदाक्षिणात्यानामग्नीनांसर्गः सम्बंधोऽमृषासत्यः । तैर्विनातदनिष्पत्तेः । स्वस्येनाः स्वेनाविप्रास्तैस्सहसीदतितिष्ठती

तिस्वेनसत्तेनब्राह्मणैर्युतेनस्वराट्स्वयंप्रकाशःतेजोऽवारिपुत्रार्थंविष्णुर्वृतइत्यर्थः । किंचायंराजर्षिरपत्यकामःप्रजांभवादृशीमाशासानइ
त्यारभ्यभगवंतमुपधावतीत्यंतोक्तेः । विप्रामंगलपूजिताः । यस्यबर्हिषियज्ञेशंदर्शयामासुरोजसेत्युक्तेश्च । यतोनाभेरनुपश्चादा
द्यस्यर्षभरूपस्यहरेर्जन्मासीत् । सनाभिर्दाःअत्युदारः । ब्रह्मण्योन्यःकुतोनाभेरित्युक्तेः । स्वेनधाम्नागृहेणभार्यया गृहिण्यैवगृहंप्रोक्तमिति
न्यायेननिरस्तकुहकंसर्वोपद्रववर्जितंबदरिकाश्रममयात् । इतरतोविरक्तःसन् । राजानाभिरात्मजंसमयसेतुरक्षायामभिषिच्येत्यादिनामे
रुदेव्यासहविशालायांप्रसन्ननिपुणेनतपसेत्यादिनाचतन्महिमानमवापेत्यंतोक्तेः । किंचयस्मिंस्तेजोरूपेहरौपरेसूरयोपिमुह्यंतितत्त्वमव
गंतुमसमर्थाभवंतितंपरंसत्यंहृदाधीमहि । यश्चनाभिर्मृदांभूप्रदेशानामविनिमयईशःपतिरितियावत् । ईशेऽविनिमयःप्रोक्तोरंकेविनिमयस्त
थेतिकोशांतरात् । इहस्वेनसदेत्यस्यावग्रहेणसामस्त्येनचान्वयोर्थाधिक्यायक्तःसचनदुष्टः । अर्थाधिक्योपलब्ध्यर्थंखंडाखंडान्वयावु
भौ ॥ विधेयौनतुदुष्टौतौचमत्कातिकरौयतः ॥ इत्यादिकाविसभोक्तेः ॥ २० ॥ ३ ॥ अथर्षभदेवलीलामाह ॥ ॥ जन्माऽऽद्यस्य यतो
ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो
यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ २१ ॥ ४ ॥ ॥ यस्त्रिसर्गस्त्रयाणांलोकानांसर्गोयस्मात्स
त्रिसर्गस्त्रिलोककृत्अजोऽजन्मापिऋषभःअभिज्ञःसर्वज्ञाद्गुरोर्ब्रह्मवेदमयात् । यथावत्विधिनाप्रदर्शितगुरुकुलवासइत्याद्युक्तेः । आदीनां
लोकानांकवयेशिक्षार्थं । कालेनानुगतंधर्ममाचरणेनोपशिक्षयन्नित्याद्युक्तेः । यद्यच्छीर्षण्याचरितंतत्तदनुवर्त्ततेलोकइत्याद्युक्तेश्च । यश्चअ
स्यर्षभस्यसकाशाद्यतोयेषांजन्मतेभ्यश्चआदिसनातनंब्रह्मज्ञानंचतेने । नायंदेहोदेहभाजांनृलोकेकष्टान्कामानर्हतेविड्भुजांये । तपोदिव्यं
पुत्रकायेनसत्त्वंशुध्येद्यस्माद्ब्रह्मसौख्यंत्वनंतमित्यारभ्यकृतांतपाशान्नविमोक्तमीशोदित्यन्तेन । यश्चार्थेषुलोकरक्षाद्यर्थंस्वेनधाम्नानिजानुभा
वेनवारिजलंचतेने । तस्यहींद्रःस्पर्द्धमानोभगवान्वर्षेनववर्षेत्यारभ्यस्ववर्षमजनाभंनामाभ्यवर्षदित्यंतोक्तेः । किंचयस्मैस्वराट्इन्द्रःमृदां
मृद्वंगींकन्यांददावितिशेषः । जयंत्यामिंद्रदत्तायामित्युक्तेः । अनुतदनुइतरतइतरःअर्हन्नामानृपोयतश्चमृषैवविनिमयोभूत् । वेदोनाराय

णःसाक्षादित्युक्तेराद्वासुदेवरूपाद्देदाद्विनिमयोविपरीतोभूत्। मृषैवतदुक्तिंविनैव। नहिऋषभदेवेनकुत्रापिकस्मैचिद्वेदविरुद्धमुपदिष्टमिति
भावः। यस्यकिलानुचरितमुपाकर्ण्यकोंकवेंककुटकानांराजार्हन्नामेत्यारभ्यकुपथपाखंडमसमंजसंनिजमनीषयामन्दःप्रवर्त्तयिष्यतइत्यंतो
क्तेः । यत्रपाखंडेतेप्रसिद्धाःसूरयोपिआपाततःशास्त्रज्ञाअपिमुह्यंतिअयमपिकश्चिद्धर्मएवस्यादितिभ्रांताःसन्तस्तदाश्रयन्तीतिभावः
। सदाहृदातंपरंसत्यंतद्रूपमृषभंधीमहि। निरस्तकुहकंसंसारोच्छेदकरमितिज्ञानविशेषणं । यद्वानिरस्तकुहकमिंद्राभिमानहरमितिपर
विशेषणंवा। इहापियतस्तेनेब्रह्मेत्यादिपदानांयथेच्छमावृत्त्यासंबंधः ॥ २१ ॥ ४ ॥ अथभरतादिचरितमाह॥ ॥ जन्मा ऽऽद्यस्य यतो
ऽन्वयादि तरतश्चा ऽर्थेष्व ऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ २२ ॥ ५ ॥ ॥ यस्मादृषभात्सूतआविर्भवतीतियत्सूर्भरतः। यच्छब्दस्त्यदा
दित्वाद्बुद्धिस्थपरः। विगतोनिमयःपुत्रादिषुसंगोयस्यसविनिमयःअंयातीत्ययोवासुदेवपरःसन्तेजोवारिगंडिकातटेयात् । तेजसाद्राविते
वास्तेजोवाःयद्वातेजसासुदर्शनेनोपाक्षिप्तंवास्तेजोवास्तस्मिंस्तथा। कदाचिदातपस्थस्यतपःकुर्वतोहरेर्गंडस्थलप्रस्वेदाद्गंडकीतिनदीजाते
तिवाराहेप्रसिद्धं । किंचकल्पांतरेतत्रस्थगजनक्रयुद्धेनक्रच्छेदार्थंसुदर्शनंहरिणातत्रक्षिप्तंतेनचक्रनदीतिसंज्ञाजातेतिपाद्मे। किंकर्त्तुमादिक
वयेहरिमाराधयितुं । सकलसंपन्निकेतात्स्वनिकेतात्पुलहाश्रमंप्रवव्राजयत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदीनामसरित्प्रवरास
र्वतःपवित्रीकरोतीत्युक्तेः । उपरतविषयाभिलाषइत्याद्युक्तेश्च । अनुपश्चात्मृद्नंतीतिमृदोव्याधास्तेषांमृदांआद्यस्यात्तुंयोग्यस्यमृग
स्यजन्मायात् । चपुनःस्वेनान्यानपेक्षत्वेनराजतइतिस्वराट्विप्रः । क्षत्रियादयस्तुब्राह्मणाधीनप्रकाशाब्राह्मणास्तुस्वयंप्रकाशाः ।
स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वंददातिच ॥ तस्यैवानुग्रहेणान्येभुंजतेक्षात्रियादयइतिमनूक्तेः । विप्रोभूत्वाइत्यर्थः । अकारादिकवये
मूर्खायरहूगणाययत्सत्यंनिरस्तानांमूढानांविस्मापकंभवाटवीरूपेकेणब्रह्मतेनेज्ञानंददौतत्परंधीमहीतिसंबंधः । अत्राप्यादिकवयइतिप
दमावृत्त्यायोज्यम् । किंभूतःअर्थेषुसर्वशास्त्राभिधेयेष्वभिज्ञःयत्रस्वराजिजडविप्रेत्रिसर्गोमृषैव । असंभावितदेहाभिमानइत्याद्युक्तेः। अ

कोविदः कोविदवादवादादित्यादिनादुरत्ययेध्वन्यजयानिवेशितइत्यादिनाचरहूगणायोपदिदेशेति । यतोयस्मादंतिसमीपएवशीघ्रमेव
इतरतःचोरराजःस्वानांभक्तानामिनाःस्वामिनःस्वेनादेवास्तेषुसीदतितिष्ठत्याकस्मिकेनरूपेणेतिस्वेनसत्तेनतथाअस्यवासुदेवस्यधाम्ना
तेजोरूपेणसुदर्शनेनमृदांमर्दनमाये । मृदामित्यप्यावृत्त्यायोज्यम् । त्वंतेजोवैष्णवंपरमित्यंबरीषोक्तेःसुदर्शनंविष्णुतेजएव । आ
यइहाममावआर्षः । भगवतोऽनिमिषारिवरायुधेनाप्रमत्तेनतैस्तैर्भावैरक्ष्यमाणानामित्याद्युक्तेः । तथाब्रह्मतेनेयथामुहीस्यात् । मुह्य
तेऽनेनेतिमुहोऽज्ञानंसोस्यास्तीतिमुही । घञर्थकप्रत्ययांतादिनिरूप्यम् । अतएवयोहवाइहबहुबिदामहाभागवतत्वयापरोक्षेणवचसा
भिहितोजीवलोकभवाध्वासह्यार्यमनीषिकयाकल्पितविषयोनांजसाऽव्युत्पन्नलोकसमाधिगमइतिवक्ष्यातिसएवोति ॥ २२ ॥ ९ ॥
॥ अथगयादिचरितमाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽय आदि कवये मुह्यं-
ति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ २३ ॥
॥ ६ ॥ ॥ यतोयस्यगयस्याद्यस्यस्वायंभुवस्यान्वयाद्वंशाज्जन्मइतरतइतेरषांतदग्रिमाणांतत्पाश्चिमानांचसुमत्यादीनांचित्ररथादी
नांचयतोजन्मासीत् । भरतस्यात्मजःसुमतिरित्यादिनातदग्रिमनृपोक्तेः । गयाद्गयंत्यांचित्ररथइत्यादिनातत्पाश्चिमनृपोक्तेश्च । यद्यस्मै
सूरयोविद्वांसोविप्राइतियावत् । आदीयतइत्यादिग्राह्यंवस्तुमुह्यंतिददति । मुहिरत्रधातूनामनेकार्थत्वाद्दानेस्ति । विनिमयोवेदाःस
वेदाजागरूकत्वेनानिमिषाःसीदतितिष्ठतिलोकोत्रेतिसदाभूमिश्च । हलंतादपिभागुरिमतेटाप् ॥ आदियथाययथावत्षष्ठांशादिरूपंददती
त्यर्थः । यस्यप्रजानांदुदुहेधराशिषोनिराशिषोगुणवत्सस्नुतोधाः ॥ छंदांस्यकामस्यचयस्यकामान्दुदूहुराजन्हुरथोबलिंनृपाः ॥ प्रत्यं
चितायुधिधर्मेणविप्रायदाशिषांषष्ठमंशंपरेत्येत्युक्तेः ।यस्यकवयेकस्यसुखस्यवयोविस्तारोयेनसकवयोयज्ञः ।यागात्सुखमनंतकमित्युक्तेः।
तस्मिन्कवयेस्वराडिंद्रःतेजोवारितेजउत्पादकंवारिसोममाये।मंत्रदत्तयज्ञभागभुजेस्तेजोवृद्धिरतएवासुरेभ्यस्तद्दानादेवाःकुप्यंतीतिप्रसि

१ किमुक्तमनेनेत्येवंरूपोभ्रमःस्यादित्यर्थः ।

द्वंपुराणे । अभिज्ञःसर्वज्ञोविष्णुश्चआंप्रसिद्धंमृद्यतेभुज्यतइतिमृद्यज्ञफलमायेआददे । निरस्तकुहकंनिष्कपटंयथातथास्वेनधाम्नाशरीरे
ण । यस्याध्वरेभगवानध्वरात्मामद्योनिमाद्यत्पुरुसोमपीथे ॥ श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहारेत्युक्तेः । किंचयस्त्रिसर्ग
स्त्रिलोकक्तततस्मैअर्थेषुधर्मादिषुतत्सिद्ध्यर्थंहृदाप्रीत्याब्रह्मज्ञानममृषासत्यंतेनेतंपरंसत्यंसर्वसत्ताप्रदंधीमहिगयायभगवताज्ञानमुपदिष्टमि
तिपुराणांतरादिति ॥ २३ ॥ ६ ॥ अथभूगोललीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्व
राट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा नि-
रस्तकु ह कं सत्यं परं धीमहि ॥ २४ ॥ ७ ॥ ॥ योऽभिज्ञःपरःहहर्षेनिरस्तांस्थिरंयत्कुतन्निरस्तकुभूगोलंतेनेतंसदासत्यंपरंधीमहि ।
किमर्थंआदिकवयेजीवानांसुखविस्तारार्थं । यत्रभूगोलेस्वराट्स्वैःस्वकेशरभूतैःकुरंगकुररवैकंकादिभिर्देदीप्यमानः । सुमेरुरस्तिकुरंगकु
ररवैकंकत्रिकूटशिशिरेत्याद्युक्तेः । इतरतइतरेपिबहवःपर्वतामलयादयोमणिकूटादयश्चसंति । किंचयतोयस्मिन्सुमेरौआद्यस्यब्रह्मणःजा
यतेऽत्रेतिजन्मपुरं । जनुषिसदनेग्रामेजन्मप्राकट्यचनव्ययोरित्यभिधानात् । अस्ति । तेजोवारिमृदांचजन्मानिपुराणिसंति । अर्थवशा
द्विभक्त्यादिविपरिणमनीयमित्युक्तेर्वचनविपरिणामः । नामैकदेशोच्चारणेनसर्वनामग्रहोऽक्षरमुष्ट्याआभाकासितपक्षेष्वित्यादिदेवोदासीयो
क्तिवत् । आकापौचैद्वितीयायांशिष्यंनाध्यापयेद्गुरुरितिसंहितोक्तिवच्च । तकारेणतनूनपदोग्नेस्तदुत्तरेकारेणेन्द्रस्यतदुत्तरजकारेणजलेशस्य
तदुत्तरोकारेणोकारःशंभुवाचकइत्युक्तेरीशानस्यतदुत्तरवाकारेणवायोस्तदुत्तररेफेणरक्षोधिपतेर्निर्ऋतेस्तदुत्तरमृकारेणमृत्योर्यमस्यतदुत्तर
कारेणदातुःश्रीदस्यग्रहःरकारइकारश्चात्राविवक्षितत्वात्परित्यक्तः । समासश्चात्रतश्चइश्चजश्चउश्चवाश्चरिश्चमाचद्ध्चतेजोवारिमृदस्तेषा
मष्टलोकपालानांपुराणिसंतीत्यर्थः । अत्रक्रमोनविवक्षितः । पदार्थेतात्पर्यात् । मेरोर्मूर्द्धनिभगवतआत्मयोनेर्मध्यतउपक्लृप्तांपुरीमयुतयोजनसा
हस्रींचतुरस्रांशातकौंभींवदंतितामनुपरितोलोकपालानामष्टानांयथादिशंयथारूपंतुरीयभागेनपुरोष्टाउपक्लृप्ताइत्युक्तेः । यत्रभूगोलेत्रयाणां
सरित्समुद्रद्वीपानांसर्गोऽमृषाअर्थेषुलोकनिवासाद्यर्थम् । यस्मिन्भूगोलेसूरयोज्योतिर्विदादयोमुह्यंति । व्यासोक्तिमुल्लंघ्यान्यथावर्णयंतीति

भावः । यत्रचांऽऽप्रसिद्धंब्रह्मणःपरमात्मनःहृद्स्वरूपभूतंकंजलंश्रीगंगारूपमन्वयात् । नारदगानोत्तरंद्रवीभूतस्यहरेःस्वरूपभूतंगांगमंभो
गोलोकाद्धामननखनिसृष्टांडद्वारेणभूलोकमागतामितिप्रसिद्धंगर्गसंहितायाम् । किंभूतःस्वराट्मेरुःस्वेननिजेनधाम्नातेजसाऽत्रिनिमयःसदै
करूपइत्यर्थः ॥ २४ ॥ ७ ॥ अथखगोलमाह ॥ ॥ जन्मा ऽद्यस्य यतो ऽन्वयादि तरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा
ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुह कं सत्यं परं धीम
हि ॥२९॥८॥ ॥ अर्थेषुकर्त्तव्याकर्त्तव्येषुअभिज्ञोयोहहर्षैनिरस्तात्यक्ताप्रसिद्धाकुर्भूमिर्यत्रतान्निरस्तकुखगोलंतेनेतंपरंधीमहि । यत्रखगोले
स्वराट्स्वयंप्रकाशःसूर्यइतरतइतरेचन्द्राद्याश्चयथायथायथंसंति । किंचयत्राद्यस्यशिशुमाररूपस्यहरेर्जन्मप्राकव्यमस्तियतोयस्याशिशु
मारस्यान्वयात्सेवनात्त्रयाणांग्रहर्क्षताराणांसर्गःउपसर्गस्तज्जनितापीडामृषाभवति । ग्रहर्क्षतारामयमाधिदैविकपापापहंमंत्रकृतांत्रिका
लम् ॥ नमस्यतःस्मरतोवात्रिकालंनश्येतत्कालजमाशुपापमित्युक्तेः । किंचब्रह्महृत्परपरायणोध्रुवश्चस्वेनधाम्नाविष्णुपदेनोपलक्षितो
यत्रास्तिआंप्रसिद्धंयद्यस्मैआदिकवयेपरभक्तायध्रुवायसूरयःसप्तर्षयोविनिमयोदेवाश्चवह्नींद्रप्रजापतिकश्यपधर्मास्ताराररूपामुह्यंतिप्रद
क्षिणीकृत्यचरंति । मुहिरत्रप्रादक्षिण्येधातूनामनेकार्थत्वात् । यएवलोकानांशमनुभावयंतऋषयोभगवतोविष्णोर्यत्परमंपदंप्रदक्षिणंप्रक्रमं
तियत्रहमहाभागवतोध्रुवऔत्तानपादिरग्निनेंद्रेणप्रजापतिनाकश्यपेनधर्मेणचसमकालयुग्भिःसबहुमानंदक्षिणतःक्रियमाणइदानीमपिक
ल्पजीविनामाजीव्यउपास्तेइत्युक्तेः । किंश्चयत्रतेजोवारिमृदांविनिमयोस्ति । तेजसामनंतताराणांवारिणामाकाशगंगाचोदरतइत्युक्तेर्मंदा
किनीजलानांमृदःततोऽधस्ताच्छतयोजनांतरइयंपृथ्वीयावद्धंसभासश्येनसुपर्णादयःपतत्रिप्रवराउत्पतंतीत्युक्तेः । सूक्ष्मायाश्चभूमेर्मानसो
त्तरोपरिसूर्यरथद्वितीयाक्षावलंबभूतावायुबद्धभूमिश्चत्वारिंशत्सहस्रयोजनमितास्तीतिस्वामिचरणोक्तभूमेश्चविनिमयोरचनास्ति । किंभू
तंपरंकंसुखरूपंसदासत्यंसतामाकाशादीनामासमंतात्सत्यत्वापादकंच ॥ २९ ॥ ८ ॥ ॥ अथाधोलोकास्थितिमाह ॥ जन्मा ऽऽद्यस्य य
तो ऽन्वयादि तरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथाऽविनिमयो यत्र

त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ २६ ॥ ९ ॥ ॥ योऽभिज्ञः निरस्तानां देवेभ्यः सुपर्णाच्च त्रस्तानाम
सुराणां नागानां च कुवासस्थानमतलाद्यधोलोकसप्तकं यथाक्रमेण तेने । अर्थेषु नागासुरवासाद्यर्थं । अधोऽसुराणां नागानां भूमेरोकोऽसृज
त्प्रभुरित्युक्तेः। यत्राधोलोके स्वराट्प्रल्हादादिस्वजनयुक्तः ब्रह्महृत्परभक्तः दाः अत्युदारः स्वशरीरस्यापि दाता आं प्रसिद्धः बलिरन्वयात्। सुतल
उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिरित्याद्युक्तेः ॥ किंच यत्राधोलोके आद्यस्य भगवतः श्रीशिवस्य जन्मप्राकट्यमस्ति। वितले हरो भ
गवान्हाटकेश्वर इत्याद्युक्तेः । यतो हरात्तेजो वा। रिभ्राति । तार्किकैः स्वर्णस्याकरजतेजस्त्वेनाभ्युपगतत्वादत्यंतानलसंयोगानाश्यत्वेन पा
र्थिवत्वनिराकरणात् तेजः सुवर्णं तदुत्पादकं वारि हाटकी सरित् । सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण यत्र चित्रभानुर्मातरिश्वना समिध्यमा
न ओजसा पिबति तन्निष्ठ्यूतं हाटकाख्यं सुवर्णमित्युक्तेः । किंच यत्र त्रिषु स्वर्गमर्त्यपाताललोकेषु सर्गो गतिर्यस्य स त्रिसर्गो रावणः कवयेकविंवे
दाविर्भावस्थानं वामनं योद्धुमन्वयात् । धाम्ना तेजोरूपेण वामनेन समृदा तिरस्कारं प्रापीति शेषः । येनांगुष्ठेन पदा दशकंधरो योजनायुतायु
तं दिग्विजये उच्चाटित इत्युक्तेः । किंच यत्र इतरत इतरे ऽर्थात्सर्पा मयकालेयनिवातकवचादयोऽनेके संति यद्भ्यः सूरयोऽपि मुह्यंति त्रस्ता भ
वंति । यत्र च स्वानां धनानामिनाः स्वामिनः स्वेनाः सर्पास्तेषु सीदतीति स्वेनसत्तेन तथा । सामान्याभिप्रायेणैकत्वम् । सर्पमूर्द्धस्थम
णिभिरित्यर्थः । सर्पाणां धनाधिपत्वं भारतादौ स्मर्यते तत्रत्यवाक्यमिह विस्तरभियानोक्तम् । न मृष्यते सह्यते कार्यार्थिभिरित्यमृषा तमो
धारा । भिदादित्वादङ् । आ। दिभक्षिता । अत्तेः कर्मणि चिण्। नाश्यते स्मेत्यर्थः । फणासु विरचिता महामणयो रोचिष्णवः पातालविवर
तिमिरनिकरं स्वरोचिषा विधमंतीत्युक्तेः । यत्र हि महाहिप्रवरशिरोमणयः सर्वं तमः प्रबाधंत इत्युक्तेश्च । यत्र चाविनिमयो विनिमयाभावो
ऽस्ति । न वा एतेषु वसतां दिव्यौषधिरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गंध्यस्वेदः क्लमो ग्लानिरि
ति वयोवस्थाश्च भवंतीत्युक्तेः । हस्य हरस्याशिवस्य संबंधिकं जलं गंगारूपं भोगवत्याख्यं चास्ति । भोगवतीति चाध इत्युक्तेः । एकदेशो
च्चारणन्यायेन हशब्देन हरोऽत्र ग्राह्यः । तच्छिरसि सदा गंगास्थितेः सा तदीयैव केकिशिखावत् । तं परं सत्यं सतां गम्यं धीमहि । अत्र यत्रान्व

यादित्यादिपदानामावृत्त्याऽन्वयः ॥ २६ ॥ ९ ॥ अथशेषलीलामाह ॥ ॥ जन्मा ऽद्यस्य यतो ऽन्वयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ २७ ॥ १० ॥ ॥ यत्रहृदायेहृदोरसाऽयतेगच्छतीतिहृदायस्सर्पस्तद्रूपेश्रीशेषेत्रिसर्गोजन्मादित्रयं मृषायतःअस्यजगतोजन्मादिसर्गस्थितिभंगंभवति । यमाहुरस्यस्थितिजन्मसंयमंत्रिभिर्विहीनंयमनंतमृषयइत्युभयत्रमानोक्तेः । यश्च कवयेसनत्कुमारायआदिब्रह्मश्रीभागवतंतेने । प्रोक्तंकिलैतद्भगवत्तमेननिवृत्तिधर्माभिरतायतेन ॥ सनत्कुमारायेत्युक्तेः । यत्रचतेजोवारिमृदांविनिमयोभूगोलंसुष्ठुस्फुटंनराजतइतिस्वराट्परमाणुरिवास्ति । यथेवार्थे । मूर्द्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलमित्युक्तेः । योर्थेषुभक्तेभ्योदेयेषुधर्मादिषुयथोचितदानादभिज्ञःअर्थिभ्योर्थंनिष्कामेभ्योमोक्षंददातीत्यर्थः । यद्यस्मिन्शेषेसूरयोपिमुह्यंति । अहोकथं पातालतलेनिराधारःस्थित्वाभूगोलंधत्तेइत्येवंमोहंप्राप्नुवंतीतिभावः । स्वेनधाम्नानिजस्वरूपप्रकाशेनइतरतोऽवाप्तपरानंदःतंनिरस्तकुहकं हृदयग्रंथिनिवर्त्तकंपरंसतांध्येयंसत्यंसदाधीमहि । हृदयग्रंथिंसत्त्वरजस्तमोमयमंतर्हृदयंगतआशुनिर्भिनत्तीत्युक्तेः ।अत्रयतोयत्रेत्यादिपदानामावृत्त्यायथेच्छमन्वयः ॥ २७ ॥ १० ॥ अथनरकास्थितिमाह ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेनेऽब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ २८ ॥ ११ ॥ ॥ यःस्वराट्परःनिरस्तानांपापिनांकुर्निवासोयत्रतन्नरकमंडलंतेने । यद्यस्यान्वयाच्छ्रवणसंबंधादेवसूरयोपिसुह्यंतित्रस्ताभवंति । अर्थेषुकृताकृतकर्मरूपेष्वभिज्ञःधर्मराजः । मनसैवपुरेदेवःपूर्वरूपंविपश्यति । अनुमीमांसतेसर्वंमनसाभगवानजइत्युक्तेः । यतःसावधानःयत्रयेषुनरकेषुजन्मनाद्योजन्माद्योब्रह्मातस्यतथाकूयतेकथ्यतइतिकवा । कौतेःस्वरादःइत्यप्रत्ययेरूपं । तयाकवयाऽऽज्ञयेत्यर्थः । चपुनःइइतिवितर्केयथायथावत्कृतकर्मानतिक्रमेणेतियावत् । इतरतइतरेषांपापिनांमृदांपीडांतेने । यत्र हवावभगवान्पितृराजोवैवस्वतःस्वविषयंप्रापितेषुस्वपुरुषैर्जंतुषुयथाकर्मावद्यंदोषमेवानुल्लंघितभगवच्छासनःसगणोदमंधारयतीत्युक्तेः ।

यत्रचाब्रह्महृदावेदाज्ञापरिपंथिनातेजोवारिद्रवीभूतंकार्ष्णायसमादिअभक्षिपीयतेस्मेत्यर्थः । यस्त्विहवैविप्रोराजन्योवैश्योवासोमपीथस्त
त्कलत्रंवासुरांव्रतस्थोपिवापिबतिप्रमादतस्तेषांनिरयनीतानामुरसिपदाक्रम्यास्येवह्निनाद्रवमाणंकार्ष्णायसंनिषिंचंतीत्युक्ते ः। तेजोवारी
त्युपलक्षणंयातनामात्रस्य । तेनकुंभीपाकमहारौरवयमचुल्हीसंदंशतप्तसूर्मिवज्रकंटकशाल्मल्यवीचिसूचीमुखादिनरकयातनाःसर्वावे
दाज्ञोल्लंघनशीलेनानूभूयंतइत्यर्थः । किंश्चयत्रत्रयाणांसत्वरजस्तमसांसर्गोमृषा । किन्त्वेकस्यतमसोगुणस्यैवसर्गस्तत्रास्तीतिभावः । य
त्रचस्वेनधाम्नायातनाशरीरेणाऽविनिमयोवियोगाभावोस्ति । आत्मनानवियुज्यमानाअसुभिश्चारुह्यमाणाःस्वाघेनकर्मपाकमनुस्मरंतउ
पतप्यंतइत्युक्तेः । तंकंसंत्यजातिकेशेषुग्रहीत्वोच्चमंचाद्भूमौनिक्षिपतीतिकंसत्यस्तंश्रीकृष्णंत्यजहानावितोडः । इस्फुटंसदापरंधीमहि ॥
॥ २८ ॥ ११ ॥ इतिपञ्चमस्कन्धार्थदिग्दर्शनम् ॥५॥ ॥अथषष्ठस्कन्धार्थदिग्दर्शनमाह ॥ अथाजामिलोपाख्यानमाह ॥ ॥ जन्माद्यस्य
यतो ऽन्वयादि तरतश्चाऽर्थे ष्वभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वे न सदा निरस्तकुहकं सत्यं परं धीमहि॥ २९॥ १ ॥ ॥आद्यस्याद्यवर्णस्यब्राह्मणस्यान्वयाद्वंशाद्यतोयस्याजामिलस्यजन्मा
भूत् । कान्यकुब्जेद्विजःकश्चिद्दासीपतिरजामिलइत्युक्तेः।यश्चार्थेषुविषयेषुइतरतःप्राप्तासंगःअब्रह्मवेदविरुद्धंब्राह्मणत्वनाशकंकर्मतेनेचक्रे ।
दास्याःसंसर्गदूषितः॥बंद्यक्षकैतवैश्चौर्यैर्गर्हितांवृत्तिमास्थितइत्युक्तेः। यदसौशास्त्रमुल्लंघ्यस्वैरचार्यार्यगर्हितइत्युक्तेश्च।यद्यस्यभगवतःसूरयोभृ
त्याःआदेब्रह्मणस्यतस्यैवकवयेसुखानिमित्तंतेजोवारिमृदांतेनिरे । अर्थवशाद्वचनविपरिणामः। सूयंतेप्रेर्य्यंतेस्वस्वकर्मस्वितिसूरयः । षूप्रेर
णेऽतऔणादिकोरिः । वार्यंतेनिवार्यंतइतिवारयोनवारयोऽवारयस्तेजसावारयस्तेजोवारयोयमदूताः । यमस्यदेवस्यनदंडभंगःकुतश्चनर्षे
श्रुतपूर्वआसीदित्युक्तेः।तेषांमृदांतिरस्कारं। भगवत्पुरुषैराजन्याम्याःप्रतिहतोद्यमाइत्युक्तेः ।तमंवासुदेवंहृदाधीमहि । अभितोजानातीत्य
भिज्ञास्तस्याभिज्ञःपरस्यअधाम्नास्वेस्वीयेसतिअस्मदीयोऽयंपरनामोच्चारीतिविचारेसाति ॥ किंभूतेनअधाम्नानसदातथाचनास्तिधो
धकारोयस्मिन्धामन्पदेतदामन्तेनाम्नानोनकारः सीदतिप्राप्नोत्यत्रेतिनसत्तेननसदाधाम्नेतिपदेधकारेगतेतत्स्थानेनकारेचागतेनाम्नेति

पदंजायते॥ अघेतितृतीयांतंघाकारलोपस्त्वार्षः। छंदोभंगभयाद्वा। अपिमाषंमषंकुर्याच्छंदोभंगंनचाचरेदितिकविसर्वस्वोक्तेः। यथा खपर कबिंदुद्वयकंलुम्वाचोपरिदकारसंस्थाने ॥ सादेशंयत्कुरुषेवैयाकरणोभवादृशोनान्यइयंशिष्टोक्तिर्दुःखमपिसुखंकरोति । तथात्रापीयंकल्प नासमंजसैवेति । अतोहरिनाम्न्युच्चरिताएवतेषांस्वीयाभिमानोजातइतिभावः। नारायणेत्यभिहितेमाभैरित्याययुर्द्रुतमित्युक्तेः। यथावि निमयोयमदूतरूपादेवामुह्यंतिकस्मादस्मान्निषेधतेतिमोहिताःसंतितथातेनिरइत्यन्वयः। किंचयत्रनाम्न्युच्चरितेत्रिसर्गस्त्रयाणांकायिकवा चिकमानसानांपापानांसर्गःसृष्टिर्मृषानश्यतीत्यर्थः। विष्णोर्नाम्न्युदितेपापंत्रिविधंनश्यतिध्रुवमित्यादिपुराणात् । स्वराड्विष्णुर्यत्त दोर्नित्यसंबंधात्तस्मैअजामिलायनिरस्तकुहकंसर्वोपद्रवरहितंवैकुंठश्वतेने । म्रियमाणोहरेर्नामगृणन्पुत्रोपचारितम् ॥ अजामिलो प्यगाद्धामकिंपुनःश्रद्धयागृणन्नित्युक्तेः । तेनइत्यावृत्त्यायोज्यम् ॥ २९ ॥ १ ॥ अथदक्षोपाख्यानमाह ॥ ॥ जन्माऽद्यस्य यतोऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ३० ॥ २ ॥ ॥ जन्माद्यस्यनारदस्यान्वयादुपदेशसं बंधात्यस्माद्दक्षात्सूयंतेयत्सुवस्तेषांरयःप्रवाहवद्धिस्तृतायुतसमूहःइतरतोविरक्तःसन्नभिभयहीनंपदमायेप्राप्तवान् । इतिव्यवसितारा जन्हर्यश्वाएकचेतसः ॥ प्रययुस्तंपरिक्रम्यपंथानमनिवर्तनमित्युक्तेः । सदक्षस्तेजोवारितेजोवत्पापप्रज्वालकंवार्यस्यतस्मिन्नघमर्ष णतीर्थेआदिकवयेहरिंप्रसादयितुंअर्थेषुसृष्ट्यादिनिमित्तंब्रह्मतपस्तेने । तमबृंहितमालोक्यप्रजासर्गंप्रजापतिः ॥ विंध्यपादानुपव्रज्य सोचरद्दुश्चरंतपः ॥ तत्राघमर्षणंनामतीर्थंपापहरंपरम् ॥ उपस्पृश्यानुसवनंतपसातोषयद्धरिमित्युक्तेः । चपुनःमुहिमोहेपुत्रनाशाकर्ण नजन्यशोकेसतिअंतिसमीपागतायार्थान्नारदायमृदांशापममृषाक्रोधेनतेने। तंतुक्तंतनयन्नस्त्वमभद्रमचरःपुनः ॥ तस्माल्लोकेषुतेमूढनभ वेद्भ्रमतःपदमित्युक्तेः। ज्ञःसर्वज्ञःत्रिसर्गस्त्रिलोककृतस्वैर्नंदसुनंदादिभिःपार्षदैराजतइतिस्वराट्। वृतोनारदनंदाद्यैःपार्षदैःसुरपूजितैरित्यु क्तेः । वौपक्षिणिगरुडेनिमयःसंगोयस्यसविनिमयः । सुपर्णस्कंधमारूढइत्युक्तेर्गरुडारूढःसन्यत्राघमर्षणेस्वेनधाम्नासुदर्शनादिनो

पलक्षितः । चक्रशंखासिचर्मेषुधनुःपाशगदाधरइत्युक्तेः । यतोयः । प्रथमार्थेतसिः । परस्तस्मैदक्षायनिरस्तकुहकंनिष्कपटंयथास्यात्त
थासत्यंमनोरथंचतेनेददौ । तनिरत्रदानेऽनेकार्थत्वात् । प्रीतोहंतेप्रजानाथयत्तेस्योद्बृंहणंतपः ॥ ममैषकामोभूतानांयद्भूयासुर्विभूतय
इत्युक्तेः । तंपरंसदाहृदाधीमहि । मनोरथमितिशेषः । प्रजावृद्धिरूपतन्मनोरथस्यभगवताभूयासुरित्यनुमोदनात्सत्यतेतिध्येयम्
॥ ३० ॥ २ ॥ अथसविश्वरूपवृत्रोपाख्यानमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने
ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निर
स्तकुहकं सत्यं परं धीमहि ॥ ३१ ॥ ३ ॥ ॥ यत्रत्रयाणांशिरसांसर्गोऽमृषासत्यःयस्माद्दक्षात्सूरयउत्पत्तिप्रवाहोयस्यसविश्वरूपः
दक्षकन्यायांजातस्यत्वष्टुरुद्भूतत्वाद्विश्वरूपस्ययच्छब्देनदक्षग्रहस्तुप्रकृतत्वात् । यस्मैकवयेइंद्राय । दितिंपर्यचरत्कविरित्युक्तेः ।
ब्रह्मनारायणकवचरूपंतेने । सकविरिंद्रस्तंविश्वरूपंइतरतस्तदितरंदध्यश्वश्वहरतिनाशयतीतिहृच्छस्त्रंतेनकरणेनआयेप्राप । अर्थात्त
च्छिरांसितद्धयशिरश्वचिच्छेदेत्यर्थः । तच्छीर्षाण्यच्छिनद्द्रुषेत्युक्तेः । दधीचःशिरोप्यश्विविद्यादानाच्चिच्छेदेतिपुराणांतरगम्यम् । द
ध्यङ्ङपिपरंपरयेंद्रायब्रह्मतेने । दध्याङ्ङाथर्वणस्त्वष्ट्रेवर्माभेद्यंमदात्मकम् । विश्वरूपाययत्प्रादात्त्वष्टायत्त्वमधास्ततइत्युक्तेः । येनास्वेना
रिणावृत्रेणनस्वोमित्रमस्वस्तेनस्वराट्इंद्रआदिअभक्षि । जग्रासससमासाद्यवज्रिणंसहवाहनमित्युक्तेः । यतोग्रासात्विनिमयोदेवाद्यामुह्यं
तिव्याकुलीभवंति । वृत्रग्रस्तंतमालोक्यसप्रजापतयःसुराः ॥ हाकष्टमितिनिर्विण्णाश्चुक्रुशुःसमहर्षयइत्युक्तेः । तस्यवृत्रस्यतेजोवारिचंद्रो
द्भूतनर्मदातटेमृदांमर्दनश्चामृषाक्रुधाययथाययथावत्तेनेअर्थेषुलोकरक्षार्थं । रेवातुनर्मदासोमोद्भवेत्यमरः । ततःसुराणामसुरैरणःपरमदारुणः ॥ त्रे
तामुखेनर्मदायामित्युक्तेः । योवृत्रःद्यतिखण्डयतीतिदाःखण्डनशीलोदैत्यरूपेणनृपरूपेणात्युदारश्च । धेनूनामर्बुदानिषडित्युक्तेः । आद्य
स्यलिंगरूपेणसर्वादिकारणस्यभवस्यधाम्नाभार्ययासत्याइतरतःजन्मइतरदेहंदैत्यरूपमन्वयात्प्राप । इतःपापीयसींयोनिमासुरींयाहिदुर्म
ते ॥ मूर्ध्नासंजगृहेशापं०–? ॥ जज्ञेत्वष्टुर्दक्षिणाग्नौदानवींयोनिमाश्रितः ॥ वृत्रइत्यभिविख्यातइत्युक्तेः । योभिज्ञःपरस्तस्मैनिरस्तकुह

कंनिरुपाधिकंरूपंचतेनेतंपरंसत्यंधीमहि । वृत्रस्यदेहान्निष्क्रांतमात्मज्योतिररिंदम ॥ पश्यतांसर्वलोकानामलोकंसमपद्यतेत्युक्तेः । तेने इतरतोयतइत्यादिपदान्यावृत्त्यायोज्यानि । यत्तदोश्चयथेच्छंसंबंधोत्रेति॥३१॥ ३॥ अथमरुदाख्यानमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरत श्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ३२ ॥ ४ ॥ ॥ यस्यमरुद्गणस्ययतोयस्याद्यस्यपरस्यान्वयात्सेवनाज्जन्म । महापुरुषपूजायाःसिद्धिःकाप्यनुषंगिणीत्युक्तेः । तंपरंसदासत्यंसत्यलभ्यंधीमहि । यत्सूर्यन्मातादितिःकवयेकविमिंद्रं नाशयितुंब्रह्मपुंसवनव्रतरूपंतपस्तेने । पुत्रमिंद्रहणंवृणइत्युक्तेः । अर्थेषुनिजहितार्थअभिज्ञोदित्यभिप्रायज्ञः । रयोवेगवान्।मत्वर्थीयोजत्र। यःस्वराड्इन्द्रइतरतःदासीभूतस्तस्यैतेजोवारिअग्निंजलंचे।पाहरदितिशेषः।तेजोवारीत्युपलक्षणंव्रतसामग्र्याःकाकदधिरक्षणन्यायेन । नित्यंवनात्सुमनसःफलमूलसमित्कुशान् । पत्रांकुरमृदापश्चकालेकालउपाहरदित्युक्तेः। अत्रचादग्निमितिबोधम् ॥ किश्चस्वेनानिजेनधाम्नाप्रभावेणयोगबलेनतस्यगणस्यहृदायःसन्मृदांमर्दनश्चतेने । हृच्छब्दोपलक्षितउदरआसमन्तादयतइतिहृदायः । दितेःप्रविष्टउदरंयोगेशोयोगमाययेत्युक्तेः । यत्रयस्यांमृदायांत्रिधाएकरूपेणसप्तरूपेणैकोनपञ्चाशद्रूपेणचसर्गस्त्रिसर्गः । संख्याशब्दाःसमासेवृत्तिंजहतीत्युक्तेर्धारूपताद्धितवृत्तेस्त्यागः । अमृषासत्योमृत्युहीनोऽभवदित्यर्थः । किंभूतस्त्रिसर्गःनविनिमयोव्यंगादिरूपोयस्यसतथा । सर्वांगपूर्णएवसर्वोगणोजातोनविकलांगइतिभावः । कृतोमेसप्तधागर्भआसन्सप्तकुमारकाः ॥ तेऽपिचैकैकशोवृक्णास्सप्तधापिनमाम्रिरइत्युक्तेः । आसमन्तात् द्यतिखंडयतींद्रंवार्षिकव्रतसङ्कल्पेनेत्यादाःदितिस्तस्यामादि । आतोलोपः । पुत्रोमेवृषहायेनकरिष्येतद्व्रतंमुनइतिपुराणांतरात् । निरस्तकुहकंनिष्कपटंयथायथावत्यइंद्रस्तेने। अंबतेहंव्यवसितमुपधार्यागतोंतिकम्॥लब्धांतरोच्छिदंगर्भमर्थबुद्धिर्नधर्मविदित्युक्तेः । किंचविनिमयोदेवाअपियत्रमरुद्गणेमुह्यंतिअहोवज्रभिन्नानामपिजीवनमितिहर्षाकुलाभवंतीत्यर्थः । अत्रापिपूर्ववद्यत्तदोर्यथेच्छमन्वयः । विनिमयपदक्रियापदावृत्तिश्च । आदादितिशब्दौपर्यायावेवैकार्थकत्वादिति ॥ ३२ ॥ ४ ॥ इतिषष्ठस्कंधार्थदिग्दर्शनम् ॥ ६ ॥ अथसप्तम

स्कन्धार्थदिग्दर्शनमाह ॥ अथप्रल्हादचरितनृसिंहलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म
हृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेऽजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन स दा निरस्तकुहकं सत्यं परं
धीमहि॥ ३३॥ १ ॥ ॥ यत्सूर्यत्पिताहिरण्यकशिपुःआदिकवयेब्रह्माणंप्रसादयितुंब्रह्मतपस्तेनेचक्रे। सतेपेमन्दरद्रोण्यामित्युक्तेः। यद्वाय
त्सूर्यन्माताकयाधुःआदिकवयेनारदायआयेप्राप। तथेत्यवात्सीद्देवर्षेरंतिसाप्यकुतोभयेत्युक्तेः। अभिज्ञोनारदतस्मैप्रल्हादायइतरतस्तन्मा
त्रेचब्रह्मज्ञानंचाद्गगवद्धर्मतत्त्वंचयथायथावत्तेने । ऋषिःकारुणिकस्तस्याःप्रादादुभयमीश्वरः ॥ धर्मस्यतत्त्वंज्ञानञ्चमामप्युद्दिश्यनिर्मल
मित्युक्तेः । सचप्रल्हादोपिइतरतइतरेभ्योदैत्यात्मजेभ्योब्रह्मतेने । तानाहकरुणोमैत्रोमहाभागवतोसुरइत्युक्तेः । किंभूतःअयोवासुदेवभ
क्तः । किंचयतोयदर्थंयद्वचःसत्यंकर्तुंयःपरःआद्यस्यजंगमापेक्षयाप्रथमस्यस्थावरस्यस्तंभस्यसकाशाज्जन्माविर्भावमन्वयात् । सत्यंविधा
तुंनिजभृत्यभाषितंव्याप्तिंश्चभूतेष्वखिलेषुचात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन्स्तंभेसभायांनमृगंनमानुषमित्युक्तेः । यश्चस्वराड्दैत्ये
द्रःयस्मैप्रल्हादायअब्रह्मवेदविरुद्धंपरविरोधमेवतेनेप्रकाशयामास । नचेद्गुरुमुखीयंतेकुतोभद्रासतीमतिरित्यादितदुक्तेः । सचहृदामनसा
ब्रह्मैव ।नवेदजगदीदृशमित्युक्तेः । किंचयत्रभगवतित्रिसर्गस्त्रिरूपसर्गोमृषामिथ्यास्ति । अहोकिमेतन्नृमृगेंद्ररूपमित्युक्तेर्द्विरूपसर्गोस्ति ।
तेनभगवतासस्वराट्मृदांमर्दनमवारिप्रापि । केनसाधनेनतत्राह । देतिद्यतिखण्डयतीतिदास्तेनदानखैरित्यर्थः । दोऽवखण्डनेकर्त्तरिक्वि
प् । आतोलोपः । अर्थेषुदेवकार्यार्थं । द्वार्यूरआपात्यददारलीलयानखैरित्युक्तेः । देत्येकत्वंतुसामान्यपरम् । अथातोनृहरेःआप्रसिद्धंईल
क्ष्मीःतेप्रसिद्धाविनिमयोदेवाइन्द्राद्याअजोब्रह्माचमुह्यंतित्रस्ताभवंति।ब्रह्मरुद्रपुरस्सराः । नोपेतुमशकन्मन्युसंरंभंसुदुरासदमित्युक्तेः । सा
क्षाच्छ्रीःप्रेषितादेवैस्सानोपेयायशंकितेत्युक्तेश्च । स्वेनधाम्नानिजैस्सुदर्शनादिभिरितरतश्चेतरैःशस्त्रैस्त्रिशूलवज्राद्यैश्चनिरस्ताद्राविताः
कुहकादैत्याद्यायेनतंपरंसत्यमेकरसंधीमहि । निजेतरायुधप्रवेकविद्रावितदैत्यदानवमित्युक्तेः । अत्रेतरतआदिकवयेब्रह्मतेनेयतइत्यादिप
दानांयत्तदोश्चयथेच्छमन्वयः ॥ ३३ ॥ १ ॥ अथत्रिपुरवधलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभि ज्ञः

स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा ऽविनि मयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥३४॥२॥ ॥ यत्रत्रयाणांहैमरौप्यायसानांसर्गोऽमृषासत्यस्तस्यत्रिपुरस्ययतःजायंतइतिजन्मानोजीवास्तेषामाद्यस्यहरेरन्वयात्संबंधात् अथासौशक्तिभिःस्वाभिःशंभोःप्राधनिकंव्यधादित्युक्तेःस्वराट्शिवःमृदांमर्दनंतेने। ददाहतेनदुर्भेद्याहरोथत्रिपुरइत्युक्तेः । अर्थेषुलोकहितार्थंतंपरंधीमहि । यस्मिंस्त्रिपुरेसूरयोनिपुणाअपिदेवामुह्यंति । भूपातालखचारित्वात् । दुर्लक्ष्यापायसंयोगाइत्युक्तेः । किंचमयोदानवःस्वेनधाम्नाविद्याबलेनअवतीत्यवीकूपस्तस्मिन्यत्तेजोवारिऔषधरसामृतमसृजदितिशेषः । तत्तेजोवारिज्ञःसर्वोपायज्ञोहरिःब्रह्मवेदोहृदियस्यतेनब्रह्महृदाब्रह्मणासहआयेपपावित्यर्थः । धातूनामनेकार्थत्वादयिरत्रपानेस्ति । किंभूतंतेजोवारिअभिमृत्युभयहरं । वत्सआसीत्तदाब्रह्मास्वयंविष्णुरयंहिगौः ॥ प्रविश्यत्रिपुरंकालेरसकूपामृतंपपावित्युक्तेः । किंभूतःशिवःआदिकवयेहरयेयथावत्तइतरतःप्रातःयद्वाकिंभूतेऽविनिआदिकस्यप्राक्सिद्धसुखस्यवयोविस्तारोयेनसतथातस्मिन् । सिद्धामृतरसस्पृष्टावज्रसारामहौजसः ॥ उत्तस्थुस्तेकुशलिनोनिद्रापायइवांजसेत्युक्तेः । किंभूतंपरंसदासत्यंसत्यसंकल्पं । पुनःनिरस्तःकुहकस्त्रिपुरकृतलोकोपद्रवोयेन तंयद्वानिरस्तस्यभग्नसंकल्पस्यशिवस्यकुहकंविस्मापकं । गोरूपेणकूपामृतपानादितिभावः ॥ ३४ ॥ २ ॥ अथवर्णाश्रमादिधर्ममाह ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ३९ ॥ ३ ॥ ॥ यःस्वराट्नरनारायणरूपो हरिःआदिकवयेनारदायतेजोवारिमृदांतेजःशब्दोपलक्षितराजसस्वभावप्रधानाःक्षत्रियाःअप्शब्दोपलक्षितसत्वप्रधानशांतस्वभावाविप्राःअरणमारस्सर्वदाचलनंसोऽस्यास्तीत्यारीवायुस्तच्छब्दोपलक्षिताःसदाचेष्टावंतोवैश्याःमृच्छब्दोदिताःश्यामवर्णाःशूद्रास्तेषांयत्रच संन्यासेत्रयाणांक्षत्रादीनांसर्गःसंबंधोमृषैवब्राह्मणस्यैवतदधिकारात् । अनृणोब्राह्मणःपरिव्रजेदितिश्रुतेः । ब्राह्मणःप्रव्रजेद्गृहादितिमानवोक्ते

१ अहमादिर्हिभूतानामित्युक्तेः ।

श्च । मुखजानामयंधर्मोयद्विष्णोर्लिंगधारणम् ॥ बाहुजातोरुजातानांनायंधर्मोविधीयतइतिदेवलोक्तेश्च । चत्वारोमुखजेप्रोक्ताआश्रमाबा
हुजेत्रयः ॥ द्वावाश्रमावूरूद्भूतेपादजेत्वेकएवहीतिश्रीमधुसूदनसरस्वत्युक्तेश्च । विप्रेतरःपतत्येवप्रव्रज्याश्रमसंग्रहादितिस्मृत्यंतराच्च । त
स्यचउपलक्षणंचैतद्ब्रह्मचर्यगृहस्थवानप्रस्थानामिति । इतरतइतरेषांवर्णसंकरांत्यजन्मयादीनांचअर्थेषुचतुर्वर्गरूपेषुधर्मार्थकाममोक्षेष्वा
द्यस्यधर्मस्यजन्माविर्भावंयथाक्रमेणहृदाप्रीत्यातेनेप्रकाशितवान् । वक्ष्येसनातनंधर्मंनारायणमुखाच्छ्रुतमितिनारदोक्तेः । तथाहिशमो
दमःशौचमित्यादिनाविप्राणांवीर्यंतेजोधृतिःशौर्यमित्यादिनाक्षत्राणांदेवगुर्वच्युतेभक्तिरित्यादिनावैश्यानांशूद्रस्यसंनतिःशौचमित्यादिना
शूद्राणांचस्त्रीणांचपतिदेवानामित्यादिनास्त्रीणांवृत्तिःसंकरजातीनामित्यादिनासंकरांत्यजादीनांच ब्रह्मचारिगुरुकुलेवसेद्भोगविवर्जितइत्या
दिनाब्रह्मचारिणांनकृष्टपच्यमश्नीयादित्यादिनावनस्थानांकल्पस्त्वेवंपरिव्रज्येत्यादिनासंन्यासिनांचगृहेष्ववस्थितोराजन्नित्यादिनागृहि
णांचसत्यंदयातपःशौचमित्यादिनासर्वेषांसाधारणधर्मांश्चोपदिदेशेतिभावः । यतोधर्मात्पुमानभिज्ञःसन्ब्रह्ममोक्षमन्वयात् । वर्त्तमानस
मीपेभूतेभवि॰ष्यतिचवर्त्तमानवद्वेतिलुङ् । उप्यमानंमुहुःक्षेत्रंशनैर्निर्वीर्यतामियात् ॥ एवंनियमकृद्राजन्शनैःक्षेमायकल्पतइत्युक्तेः । कषा
यपक्तिःकर्माणिततोज्ञानंप्रवर्त्ततइतिश्रुतेश्च । यतोधर्मात् अविनिमयोजातिविपर्ययोनभवतिविपर्ययेतुधर्मेप्रवृत्तिरेवनस्यादितिभावः । य
द्वा यद्यस्यलक्षणंप्रोक्तंपुंसोवर्णाभिव्यंजकम् ॥ यदन्यत्रापिदृश्येततत्तेनैवविनिर्दिशेदित्युक्तेर्विनिमयश्चभवति । यस्मिन्धर्मेसूरयोऽभ्य
स्तशास्त्राअपिमुह्यंति । गहनाकर्मणोगतिर्धर्मस्यसूक्ष्मागतिरित्याद्युक्तेः । श्रुतयश्चाभिन्नाःस्मृतयश्चभिन्नानैकोमुनिर्यस्यवचःप्रमाण
म् ॥ धर्मस्यतत्वंनिहितंगुहायामितिभारतोक्तेश्च । किंभूतंजन्मस्वेनधाम्नाप्रभावेणनिरस्तंकुहकंपापलक्षणंयेनतत्तथा । धर्मेणपापमपनु
दतीतिश्रुतेस्तंपरंसत्यंसदाधीमहि ॥ ३९ ॥ ३ ॥ इतिसप्तमस्कंधार्थदिग्दर्शनम् ॥ ७ ॥ अथाष्टमस्कंधार्थदिग्दर्शनमाह ॥ तत्रादौ
यज्ञावतारलीलामाह ॥ ॥ जन्माऽऽद्यस्य यतोऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये
मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

॥ ३६ ॥ १ ॥ यद्यस्मात्स्वायंभुवस्यमनोःसकाशात्सूरयउत्पत्तिप्रवाहः । यतःसृष्टमिदंजगदित्युक्तेः । समनुरर्थेषुविषयेषुइतरतोविरक्तः सन्तेजोवारितेजोवत्पापहारिजलेऽर्थात्सुनंदायांनामांतरापन्नगंगायामेवनद्यांतत्तटेस्वेनधाम्नाभार्ययासहआदिकवयआदिकविंहरिमाराधयितुंनिरस्तकुत्यक्तभूमंडलंयथास्यात्तथाब्रह्मतपस्तेने । विरक्तःकामभोगेषुशतरूपापतिःप्रभुः ॥ विसृज्यराज्यंतपसेसभार्योवनमाविशत् ॥ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन्नित्याद्युक्तेःचपुनस्तस्याद्यस्यमनोरन्वयात्कन्यातोयतोयस्यजन्माभूत् । आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः ॥ धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतइत्युक्तेः । यश्चाभिज्ञःपरःमृद्गातिक्लेशयंतिलोकानितिमृदोऽसुराद्यास्तेषांमुहिमोहेसतिअंतितत्क्षणमेवविनिनाशंकृत्वेतिशेषः । नाशेविनिरथाकाशइतिनामचिंतामणेः । स्वराट्इन्द्रःसन्नहस्फुटंकंस्वर्गानंदमाये । यत्रस्वर्गेत्रयाणांगुणानांसर्गोमृषा । देवानांशुद्धसत्त्वानामित्युक्तेः । सात्विकसर्गस्यैवतत्रसत्त्वात् । यद्वात्रयाणाममृतपानाप्सरोभोगविमानयानानांसर्गःसंबंधोयत्रामृषा । तंपरमवासुदेवरूपंयज्ञंसदाहृदाधीमहि । इतिमंत्रोपनिषदंव्याहरंतंसमाहितं ॥ दृष्ट्वासुरायातुधानाजग्धुमभ्यद्रवन्क्षुधा ॥ तांस्तथावसितान्वीक्ष्ययज्ञःसर्वगतोहारिः ॥ यामैःपरिवृतोदेवैर्हत्वाशासात्त्रिविष्टपमित्युक्तेः ॥ ३६ । १ ॥ अथगजेंद्रमोक्षलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंतियत्सूरयः तेजो ऽवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदानिरऽस्तकुहकं सत्यंपरं धीमहि ॥ ३७ ॥ २ ॥ ॥ यत्रसरसिदानेनमदेनसहवर्त्ततइतिसदानिः । सहादित्वाद्दानस्यदानिरादेशः । करेणुभिर्वृतोमदच्युदित्याद्युक्तेः । स्वैःस्वीयैःपुत्रकलत्राद्यैराजतइतिस्वराट्गजःयतःसावधानःजन्मचतदाद्यंजन्माद्यंतस्यपूर्वजन्मनःअन्वयात्संबंधात्अभिज्ञः । सर्वज्ञस्यपरस्ययथायथावद्धृदामनसाब्रह्मस्तुतिंतेने । एवंव्यवसितोबुद्ध्यासमाधायमनोहृदि ॥ जजापपरमंजाप्यंप्राग्जन्मन्यनुशिक्षितमित्युक्तेः । यत्रात्रिसर्गस्त्रिलोकक्रुद्धरिर्विनिमयोगरुडारूढःअप्सुजलेष्वारोगतिरस्यास्तीत्यवारीनक्रस्तस्यमृदांमर्दनंचतेने । केनस्वेननिजेनधाम्नातेजसाचक्रेणेत्यर्थः । अमृषाक्रोधेन । छंदोमयेनगरुडेनसमुह्यमानइत्युक्तेः । चक्रेणनक्रवदनंविनिपाट्येत्याद्युक्तेश्च ॥ यद्यदासूरयोब्रह्माद्याअप्यर्थेषुकर्त्तव्येषुकिंकर्त्तव्यमधुनेतिमुह्यंति

तत्रनागताइत्यर्थः । ब्रह्मादयोविविधलिंगभिदाभिमानानैतेयदोपससृपुरित्याद्युक्तेः । तदाद्यःपरःकवयेस्तुतिकर्त्रेगजायअस्तकुहकंसर्वोपा
विविवर्जितंनिजरूपभूतंवैकुंठंइतरतइतरस्मैनक्रायआदिप्राक्तनंतेजोरूपंगंधर्वतनुश्चतेनेददौतंपरंसत्यंधीमाहि । गजेंद्रोभगवत्स्पर्शाद्विमु
क्तोऽज्ञानबंधनात् ॥ प्राप्तोभगवतोरूपमित्युक्तेः । योसौग्राहःसवैसद्यःपरमाश्चर्यरूपधृक् ॥ मुक्तोदेवलशापेनहूहूर्गंधर्वसत्तमइत्युक्तेश्चा।इ
हतेनइतिक्रियापदमावृत्त्यायोज्यम् ॥ ३७ ॥ २ ॥ अथसमुद्रमथनलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थे
ष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन
सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ३८ ॥३ ॥ ॥ यःपरःतेजउत्पादकंवारियस्यसतेजोवारिःक्षीरोदःक्षीरस्यैवतेजोजनकत्वात् । तेजो
त्रबलंघृतंवातस्यमृदांमंथनंस्वेननिजेनधाम्नारूपेणकर्णेनआतेने । यथेत्यत्रछिन्नेनव्यवहितेनाप्याकारेणव्यवहिताश्छंदसीतिसंबंधः।तंपरंस
त्यंधीमाहि । यतोमंथनहेतोःस्वराडिंद्रःब्रह्महृदाईश्वरशिक्षयाऽभिज्ञःसन्आदिकवयेपरभक्तायबलयेऽन्वयात् । अमृताद्यवाप्त्यर्थंसंधिंकर्तु
मितिभावः । यातदानवदैतेयैस्तावत्संधिर्विधीयतामित्याद्युक्तेः। किंभूतःस्वराट्अर्थेषुसमुद्रोद्भूतपदार्थेषुविनिमयःसंगरहितः। लोभःकार्यो
नवोजातुरोषःकामस्तुवस्तुष्वितिभगवदुक्तेः। तस्मिन्मणौस्पृहांचक्रेबलिर्नेन्द्रइत्याद्युक्तेश्च। यतोमथनादाद्यस्यात्तुंयोग्यस्यामृतस्यइतर
तइतरेषांकामधेन्वैरावतोच्चैःश्रवःकालकूटादीनांचजन्मासीत् । ईअथआइतिच्छेदः । अथानन्तरमीलक्ष्मीश्चासीत् । किंचयत्रकूर्मरू
पधामानित्रयाणांनत्युन्नतिसाम्यानांसर्गऊर्ध्वाधोभागेनामृषैव । यस्मिन्कूर्मरूपेसूरयोपिमुह्यंतिकथमनेनधारणायोग्येपृष्ठेमन्दरागिरिर्धृ
तइतिमोहिताभवंतीतिभावः । किंभूतंपरंसतांदेवानामानिरस्तमपास्तंकुहकंवैक्लव्यंयेनसतथातम् ॥ ३८ ॥ ३ ॥ अथधन्वंतरिलीलां
मोहनीरूपलीलांचाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषाधाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ३९ ॥ ४ ॥ ॥ यत्तेजोवा
रितेजउत्पादकंवारिअमृतंत्रिषुदेवदैत्यनरेषुतत्तद्रूपेणसर्गःसंबंधोयस्यसत्रिसर्गःस्वान्निजनामस्मर्तॄन्राजयतीतिस्वराट्धन्वंतरिः। स्मृतमा

त्रार्त्तिनाशनइत्युक्तेः । आयेआनीतवान् ॥ प्रापणेत्रायधातुः । अर्थेषुकर्तव्याकर्तव्येषुयथायथावत् । अभिज्ञःतत्तेजोवारिमृषाधाम्नातदै
वकल्पितेनस्वेननिजेनमोहिनीरूपेणब्रह्मज्ञानंतद्धरतीतिब्रह्महृत्सन्आदिकवयेइंद्रायतेनेददौइतरतइतरेभ्योदैत्येभ्योनतेने । नेतिशेषः ।
आदिकवयइत्येकसंबंधिज्ञानमपरसंबंधिस्मारकमितिन्यायेनदेवेभ्योददावित्यर्थः । असुरेभ्यःसुधादानंसर्पाणामिवदुर्नयम् ॥ मत्वा
जातिनृशंसानांनतांव्यभजदच्युतइत्युक्तेः । यतोमोहिनीरूपात्सूरयोमहादेवादयोमुह्यंतिकामाविवशाभवंतीतिभावः । किंभूतंतेजो
वारिजन्मआद्यंयस्यसजन्माद्योमृत्युःयज्जन्यंतद्विनाशीतिव्याप्तेः । तस्यान्वयंसंबंधमत्तिनाशयतीत्यन्वयात्मृत्युहरमित्यर्थः । यतोऽ
मृतस्यहेतोर्मृदांमर्दनशीलानांदेवानांदैत्यानाश्चविनिमयःक्लेशहेतुःसंग्रामोभूत् । निरस्ताःकुहकाःकपटिनोदैत्यायेनतंपरंसत्यंसतांपालकं
सदाधीमहि । इहापियतस्तेनइत्यादिपदानामावृत्त्यान्वयः ॥ ३९ ॥ ४ ॥ अथमन्वंतरलीलामाह ॥ ॥ जन्माऽद्यस्य य तोऽ
न्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरयः॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४० ॥ ५ ॥ ॥ यत्रमन्वंतरेषुस्वराट्इंद्रःविनिमयोदेवाःसूरय
ऋषयोयतोयस्यमनोरन्वयाद्वंशाच्चार्थात्तत्पुत्राइतरतइतरेगंधर्वाद्याःआद्यस्यपरस्यजन्मअवतारश्चामृषासत्याःसंति।त्रयोवर्त्तमानादयःस
र्गभेदायस्यसत्रिसर्गस्तत्तद्भोग्यकालश्चास्ति । मन्वंतरेषुमनवस्तत्पुत्राऋषयःसुराः ॥ भवंतियुगपच्चैतेसुरेशायेचताननु ॥ मन्वंतरेषुभग
वान्बिभ्रत्सत्त्वंस्वमूर्त्तिभिरित्याद्युक्तेः । तत्रयोभिज्ञःपरःधाम्नातत्तद्रूपेणयथायथावत्तेजोवारिमृदांब्रह्मचतेने । अर्थेषुकार्येषुजगत्स्वित्यर्थः।
तेजःसामर्थ्यंवीर्यंचवारिजलंमृदांनाशंब्रह्मवेदोक्तंकर्मज्ञानंयोगंचप्रकाशितवान्यद्यस्यपरस्यआदिकंसनातनसुखंस्वरूपज्ञानंवावातिहिन
स्त्यावृणोतीत्यादिकवामायातयाइइतिस्मृतौस्वेस्वीयाअर्थाद्भक्तानमुह्यंतिकिंतुतांतरंति । मामेवयेप्रपद्यंतेमायामेतांतरंतितइत्युक्तेः । ते
जआदितननेप्रमाणंतु । इंद्रोभगवतादत्तामित्यारभ्यकामंलोकेप्रवर्षतीति । ज्ञानंचानुयुगंब्रूतेहरिःसिद्धस्वरूपधृक् ॥ ऋषिरूपधरःकर्म
योगंयोगेशरूपधृक् ॥ सर्गंप्रजेशरूपेणदस्यून्हन्यात्स्वराड्वपुः ॥ कालरूपेणसर्वेषामभावायपृथग्गुणः ॥ इतिचैतद्यथायथमूह्यं । तंसदास

त्यंरूपापायेपिविद्यमानंपरंहृदाधीमहि । किंभूतंनिरस्तमपाकृतमिंद्रादीनांकुहकंदुःखंयेनतम् ॥ ४० ॥ ५ ॥ अथवामनलीलामाह ॥
जन्माद्यऽस्य यतोऽन्वऽयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां
यथा विनिमयो यत्र त्रिसर्गो मृषाधाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ४१ ॥ ६ ॥ ॥ सचदाःअत्युदारोबलिःस्वरा
ट्परजनशोभीअर्थेषुधर्मादिषुअभिज्ञस्तत्तत्फलज्ञःयस्मैकवयेपरायमृदांभूमिंतेनेतेनब्रह्महृदाब्रह्मवेदंहरतिप्राप्नोतीतिब्रह्महृत्तेनब्राह्मणरूपे
णवामनेनधाम्नारूपेणयतोयस्यविश्वस्यजन्माद्यस्तितद्विश्वंनिरस्तागृहीताकुर्भूमिर्यस्मिन्कर्मणितद्यथातथाआसर्वतःअवारिआवृतं। य
त्रधाम्निविनिमयोदेवाआसन्त्रिसर्गःपादत्रयसृष्टिश्चासीत्अनुततःस्वेनात्मना। पादंतृतीयंकुरुशीर्ष्णिमेनिजमित्युक्तेरात्मसमर्पणेनमृषामि
थ्यावादंपरेणसमर्प्यमाणंतरतोलंघतोस्यबलेरयादिपातालैश्वर्यादितेजश्चेंद्राधिकारश्चाभूत्तंपरंसत्यंआदिकारणंकंसुखरूपंहहर्षेधीमहि। य
स्मिन्वामनरूपेसूरयोपिमुह्यंतिशुक्राद्याअपि । सर्वस्वंविष्णवेदत्वामूढवर्त्तिष्यसेकथमित्यादिनासाक्षाज्जगदीशेपिसमर्प्यमाणदाननिवारणे
नानभिज्ञाइवभवंतीतिभावः । प्रमाणंचात्रयत्कायएषभुवनत्रयसन्निवेशइत्यादि । सुतलंस्वर्गिभिःप्रार्थ्यमित्यादिवाक्यजातंबह्वस्तीति ॥
॥ ४१ ॥६॥ अथमत्स्यलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये मुह्यं
ति यत्सूरयः ॥ तेजो वारिमृदां यथा ऽऽवि निमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ४२ ॥ ७ ॥
तेजस्तन्मयःसूर्यःयस्यसत्यव्रतस्यान्वयोवंशस्तस्यादिकारणंजन्मकर्तृस्यादितिशेषः । सप्तमकल्पेयस्तुवैवस्वतमनुःस्यादित्यर्थः । यश्च
अर्थेष्वभिज्ञःसप्तमेद्यतनादूर्ध्वमित्याद्युक्तेर्भाविप्रलयज्ञःतेनमत्स्यरूपेणपरेणेत्यर्थः । सप्रसिद्धःदाःमहादातास्वराट्महाराजःसत्यव्रतःसप्त
र्षिसहितोवाकर्मभूतःआद्यस्यभक्ष्यस्यकस्यवयेजलप्रवाहेतरतःप्लवतोमत्स्यस्येत्यर्थः । जन्मयतःप्राप्तस्ययत्यस्यपरस्यानिरस्तकुशृंगाकृ
ष्टनौभूतभूमंडलंयथाभवतितथावारिप्रलयजलंमृद्नातीतितथोक्तेनधाम्नातेजसास्वेनस्वरूपेण । कर्त्रा । यथाआविराक्षितःतथाआयआग
तःब्रह्महृतवेदहर्त्ताहयग्रीवश्चादिभक्षितोमारितइत्यर्थः । कुत्रयत्रजलेनिमय्यतेएकत्रप्रक्षिप्यतइतिनिमयःलीयमानास्त्रिसर्गस्त्रैलोक्यंमृषामि

थ्यासीत्हस्फुटंकंजलंसत्यमासीत्सूरयोमार्कंडेयादयोपियत्रजलेमुह्यंतीत्यर्थः । इप्रसिद्धौआंस्मरणेऽव्ययद्वयम् । यद्वायोमत्स्यआदिक
वयेसप्तर्षिभ्यःसत्यव्रतायचब्रह्मतद्रूपंमात्स्यंपुराणंज्ञानंवाहृदाप्रीत्यातेनतंधीमहि । अहंत्वामृषिभिःसार्द्धंसहनावमुदन्वति ॥ विकर्षन्विच
रिष्यामियावद्ब्राह्मीनिशाप्रभो ॥ मदीयंमहिमानंचपरब्रह्मेतिशब्दितम् ॥ वेत्स्यस्यनुगृहीतंमेसंप्रश्नैर्विवृतंहृदीत्याद्युक्तेः ॥ ४२ ॥ ८ ॥
इत्यष्टमस्कन्धार्थदिग्दर्शनम् ॥ ८ ॥ अथनवमस्कन्धार्थदिग्दर्शनमाह ॥ तत्रादौवैवस्वतवंशराजतेजःप्रकाशनप्रसंगमाह ॥ ॥ जन्मा
ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा
विनिमयो यत्र त्रिसर्गो मृषा धाम्नास्वे न सदा ऽऽनिरस्तकु ह कं सत्यं परं धीमहि ॥ ४३ ॥ १ ॥ ॥ तेजोज्योतिर्यतःप्राप्तात्आ
त्वासुदेवरूपात्सूर्यात् । आदित्यंयेप्रपश्यंतिमांपश्यंतिनसंशयइतिभाविष्येश्रीमुखोक्तेः । यस्यश्राद्धदेवस्यमनोर्जन्मासीत्तस्यान्वयाद्वं
शाद्यत्सूरयःशस्त्रशास्त्रविद्यापण्डितायेइक्ष्वाकुप्रभृतयोराजानोऽभवन्अरिमृदांशत्रुहंतॄणामंतःशत्रुजयिनांतेषांहृत्चित्तंअभिज्ञःसर्वज्ञःस्व
राट्स्वयंज्योतिः आदिब्रह्मअजःपरश्चकवयेस्वसुखविस्तारेआतेने।व्यवहिताश्छंदसीत्याङ्संबंधःधारयामासेत्यर्थः। हृदितिकर्मणिद्विती
याक्लीबे । यद्वातेषांहृदाचित्तेनअभिज्ञस्तेनेधृतइतिकर्मणिलिट्। तेचराजानःविनिमयोयथादेवाइवमहदैश्वर्यवंतोपिधाम्नासुएनसत्आनिर
स्तकुएवंपदच्छेदः ॥ एवंसतिएअकारवाच्येवासुदेवेयत्रपरस्मिन्धाःधारणाम्नाअभ्यासाःधानांम्नाधाम्नास्तासुसतीषुइतरतस्ताद्भिन्नेष्वर्थेषु
कामादिषुनमुह्यंतिनलुभ्यंतीत्यर्थः।किंतेकामाःसुरस्याहीमुकुंदमनसोद्विजाः॥अधिजह्रुर्मुदंतस्यक्षुधितस्ययथेतरइत्युक्तन्यायेनविक्रीडतो
मृतांभोधौकिंक्षुद्रैःखातकोदकैरितिन्यायेनवा । ततश्चत्रिसर्गःसंसारस्त्रैगुण्यंमृषामिथ्यानिरस्तकुअलौकिकंसत्कंसुखंचभवतिसत्यंतंपरं
धीमहिह वास्फुटार्थे॥४३॥१॥अथकेषांचिद्राज्ञामपिकिंचिच्चरितंवर्णयिष्यन्नादाविलासुद्युम्नचरितमाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादि
तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६४ ॥ २ ॥ यतोयस्यमनोर्वैवस्वतस्यसकाशात्स्वेनस्वीयेनार्थाद्गुरुणावसिष्ठे

नराजतेपुंस्त्वावाप्त्याशोभतेइतिस्वराट्सुद्युम्नोभूत् ॥ आचार्यानुग्रहान्नूनंलब्ध्वापुंस्त्वमित्युक्तेः । सचमनुस्तेजोवारियमुनातटेकस्यसु
खस्यवयोविस्तारोयेनसकवयःपुत्रस्तस्मिंस्तथातान्निमितं । निमित्तेसप्तमी । नसुखंपुत्रहीनस्यऐहिकामुष्मिकंतथेतिस्मृतेः। मनुर्वैवस्वतः
सुतः । पुत्रकामस्तपस्तेपेयमुनायांशतंसमाइत्युक्तेः । ब्रह्मतपस्तेने ॥ सचतस्यपुत्रःसुद्युम्नःमृद्यतेनिधुवनावसरेयासामृदास्त्रीतां । भाव
प्रधानोनिर्देशः । मृदात्वंस्त्रीभावमायेप्राप । इतरतइतरेतदनुगाश्चस्त्रीभावमायिरे । अर्थवशाद्वचनविपरिणामः । एवंस्त्रीत्वमनुप्राप्तःसु
द्युम्नोमानवोनृपइत्युक्तेः । अपश्यत्स्त्रियमात्मानमश्वंचवडवांनृपः। तथातदनुगाःसर्वेआत्मालिंगविपर्ययम् ॥ दृष्ट्वाविमनसइत्युक्तेश्चपुनरि
त्युक्तेः । पूर्वमपिसराजास्त्र्येवेतिज्ञायते । तच्चाग्रेस्फुटीभविष्यतीलानाम्नेति । यत्रयस्यांमृदायांज्ञःबुधःअर्थेषुसत्सुकामपीडयान्योन्यमभि
लाषेषुसत्सुनिरस्तानांदेवानामपिकुहकंरूपसंपत्त्याविस्मापकंस्वेनधाम्नावीर्येणसत्यंसत्यपदवाच्यंपुत्रमर्थात्पुरूरवसंतेनेरचयामाससतत्स्व
र्गादिददातीतिसत्यं। आभूतसंप्लवस्थानंसादितिप्रोच्यतेक्वचिदित्युक्तेःस्वर्गाद्यपिसच्छब्दार्थः । सर्वेष्वर्थेषुसर्वेताद्धितप्रत्ययाइतिवैयाकरणा
नव्याः । णित्त्वंचैषांवैकल्पिकमितिप्रांचः । तथाचात्रसतोण्यः।चकमेभगवान्बुधः । सतस्यांजनयामासपुरूरवसमात्मजमित्युक्तेः । किं
चयत्रसुद्युम्नेत्रिसर्गोमृषा । तस्यस्त्रीपुंरूपोभयसर्गवत्त्वात् ।ब्रह्महत्वेदाभिप्रायज्ञोवासिष्ठस्तस्मैसुद्युम्नायआदिस्त्रीभावतःप्राक्तनंअभिभयहरं
पुंस्त्वंयतोजन्माद्यस्यभगवतोहरिहरमूर्त्तेरन्वयात्सेवनात्तेनेतंपरंसदाधीमहि ॥अस्तौषीदाद्यपुरुषमिलायाःपुंस्त्वकाम्ययेतिसद्युम्नस्याशय
न्पुंस्त्वमुपाधावतशंकरमित्युभयविधोक्तेः। किंभूतःवासिष्ठःयथायथावत्अविनिमयःनविनिमयोमनुमारभ्यानेकनृपतिविनिमयेपिपौरोहित्ये
स्येत्यविनिमयःयद्यस्मिन्पौरोहित्यस्थितेवासिष्ठेसूरयोपिमुह्यंति। अहोअतिगर्ह्यंपौरोहित्यंकथंसर्वज्ञशिरोमणिनाभगवताश्रीवासिष्ठेनबहुका
लंस्वीकृतमितिशंकाकुलितहृदयाभवंति पौरोहित्यस्यगर्हितत्वंपौरोधसंहृष्यातियेनदुर्मतिःकथंनुगर्ह्यंचकरोम्यधीश्वराः । विगर्हितंधर्म
शीलैर्ब्रह्मवर्चउपव्ययमित्याद्युक्तेःप्रतिग्रहाच्छुध्यतिजाप्यदानैर्नयाजकंचेहपुनंतिवेदाइतिगरुडेभगवदुक्तेश्च । याजकोपाध्यायपरोहितर्त्वि
गाचार्यगुरुशब्दाःपर्यायवाचकाएव । वृणीमहेत्वोपाध्यायमित्युपक्रम्यपौरोहित्यंवृतश्चक्रइत्युपसंहाराच्च । अन्यथाउपक्रमोपसंहारावेक

रूपौभृशंसदेत्युक्तेर्व्यार्कोपः स्यादिति ।प्रल्हादंदैत्ययाजकाः।पौरोहित्यायभगवान्वृतःकाव्यःकिलासुरैरितियावद्गुरुर्भार्गवआगमिष्यतीतिय
दाचार्यःपरावृत्तोगृहमेधीयकर्मस्वितिनिमिरिक्ष्वाकुतनयोवसिष्ठमवृत।र्त्विजमितिचशारद्वतंगुरुंकृत्वेतिकावषेयंपुरोधायेतिगर्गःपुरोहितोरा
जन्निितियदूनामहमाचार्यइतिगर्गाद्यदुकुलाचार्यादितिचबहुवाक्यजातमन्यच्चात्रप्रमाणम् । अथप्रकृतमनुसरामः । इहयतस्तेनेइत्यादिप
दानांयत्तदोःसंबंधस्यचयथेच्छतेति ॥ ४४ ॥ २ ॥ अथशर्यातिचरितमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः
स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा
निरस्तकुहकं सत्यं परं धीमहि ॥ ४५ ॥ ३ ॥ ॥ यस्यशर्यातेराद्यस्यमनोरन्वयाज्जन्मसयस्मैआदिःप्रथमःकविःशुक्रोयस्यसआदिक
विश्च्यवनस्तस्मैच्यवनस्यभार्गवत्वात् । मृदांमृद्वंगींसुकन्याख्यांस्वांकन्यांतेनेयद्यस्यांकन्यायांसूरयश्च्यवनोश्विनौचमुह्यंति । अश्विभ्या
मपितद्रूपधर्षिताभ्यांताद्दङ्मूर्तीधृतेअगदनिर्मितन्हदे॥पुरुषास्त्रयउत्तस्थुस्तुल्यरूपाःसुवाससइत्युक्तेः।किंभूतःशर्यातिःअभिज्ञःमुनेरभिप्रा
यज्ञःतदभिप्रायमाज्ञायप्रादाद्दुहितरंमुनेरित्युक्तेः । क्वसत्सुअर्थेषुसैनिकलोकरक्षादिरूपेषुसत्सुशकृन्मूत्रनिरोधोभूत्सैनिकानांचतत्क्षणादित्यु
क्तेः । यत्रययोरश्विनोस्त्रिसर्गोमृषातयोर्द्धिमूर्तित्वात्।तौदेवौतमादिकविंनिरस्तंकुहकंवार्द्धक्यंयस्यसतथातंयुवानंचतेनाते।इहवचनविपरि
णामोऽर्थवशात् ।केनस्वेननिजेनधाम्नौषधविद्याप्रभावेण।किंचसचपुनःशर्यातिःइतरतइतरस्मिन्राजधानीतोन्यत्रार्थाश्च्यवनाश्रमेब्रह्मयज्ञं
यथायथोचितंयमादिकविंहरिमाराधयितुंतेनेतंसदासत्यंपरंधीमहि।यक्ष्यमाणोथशर्यातिश्च्यवनस्याश्रमंगतइत्युक्तेः यत्रब्रह्मणियज्ञेस्वराडिं
द्रोहरतीतिहृत्तेनवज्रेणसहविनिमयोविपर्यस्तोभूत् । सवज्रंस्तंभयामासभुजमिंद्रस्यभार्गवइत्युक्तेः । पुनश्चतेजोनिजंपूर्वप्रभावमवारिगु
रुकृपयेतिशेषः। अत्रआदिकवयेयतस्तेनेयोयत्रेतिपदानांयथेच्छमन्वयः ॥ ४५ ॥ ३ ॥ अथरेवतादिचरित्रमाह ॥ जन्माऽऽद्यस्य
यतोऽन्वयादि तरश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रि
सर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४६ ॥ ४ ॥ ॥ यस्मातशर्यातेरानर्तद्वारासूतेइतियत्सूरेवतः । तेजो

वारिऔर्वाग्निर्युतेसमुद्रेब्रह्मतेने । ब्रह्मशब्दःस्वप्रापकेलाक्षणिकः ब्रह्मप्रापकंद्वारकापरपर्यायंकुशस्थल्याख्यंनगरंतेनेद्वारकायामोक्षप्रद
पुरीषुगणनात् । अयोध्यामथुरामायाकाशीकांचीह्यवंतिका ॥ द्वारावतीपुरीज्ञेयाःसप्तैतामोक्षदायिकाइत्युक्तेः । कुशस्थलीस्वर्यशसस्तिर
स्करीत्युक्तेःरपिमोक्षप्रदैवसेतिलभ्यते । शर्यातेरानर्तःआनर्ताद्रेवतोऽभवत् । सोंतःसमुद्रेनगरींविनिर्मायकुशस्थलीमित्युक्तेः । ततोयस्यज
न्मसककुद्मीआद्यस्यब्रह्मणस्सत्यमन्वयात्सत्याख्यंलोकमितिभावः । अर्थेषुकन्यावरपृच्छार्थं तस्यपुत्रशतंजज्ञेककुद्मिज्येष्ठमुत्तमम् ॥ ककु
द्मीरेवतींकन्यांस्वामादायविभुंगतः । कन्यावरंपरिप्रष्टुमित्युक्तेः । ततःब्रह्मह्रदाब्रह्माज्ञयामृदांमृद्वंगींआदिकवयेश्रीबलदेवायचयथोचितंते
नेददौ । कन्यारत्नमिदंराजन्नररत्नायदेहिभोः ॥ इत्युक्तः सददौकन्यांबलायइत्युक्तेः । यत्रब्रह्मलोकेत्रयाणांचतुर्युगनवकानांसर्गोमृषा । कालोभि
यातस्त्रिणवचतुर्युगविकल्पितइत्युक्तेः । यत्रकालेचसूरयोपिमुह्यंतितस्यदुर्ज्ञेयत्वात्अनुयश्चइतरतःविरक्तःसन्स्वराट्ककुद्मीयंह्रदाध्या
तुंनिरस्तकुहकंनिरुपद्रवंबदर्याख्यंस्थानमयात् । ध्यातुमितिशेषः । तंपरंसदाधीमहि । किंभूतंअभिसंसारभयहरं । बदर्याख्यंगतोराजातप्तुं
नारायणाश्रममित्युक्तेः । चपुनर्यतोयस्यारेवत्यायःशुभकृदपिज्ञोबुधग्रहोविनिमयोविपर्यस्तःस्वेनानिजेनधाम्नाप्रभावेणाकारीति । श्री
बलदेवप्राप्त्यर्थंतपःकृतवतींवरीतुंगतस्यबुधस्यरेवत्येतिशापोजातस्तवदिनारब्धंकार्यंप्रायोन सेत्स्यतीति ॥ इहयतस्तेनेचयत्रेतिपदाना
मावृत्त्यान्वयः । यत्सूरयोऽन्वयाद्ब्रह्मह्रदेतिपदानामवग्रहेणाप्यन्वयः । यत्तदोश्चयथेच्छंसंबंधः ॥ ॥ ४६ ॥ ४ ॥ अथांबरीषच
रितमाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म ह्रदा य आदिकवये मुह्यंति यत्सूर
यः ॥ तेजो वाऽरिमृदां यथाऽविनिमयो यत्र त्रिसर्गो मृषाधाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४७ ॥ ९ ॥
यतोयस्मैयोहरिःपरस्तेजःसुदर्शनचक्रं । त्वंतेजःपौरुषंपरमित्युक्तेः । तेने वेतिस्फुटमामितिच । किंभूतंतेजःअरिमृतशत्रुमारकम् ।
यस्माअदाद्धरिश्चक्रंप्रत्यनीकभयावहमित्युक्तेः । तंपरंधीमहि । यश्चस्वराट्अंबरीषोऽर्थेषुभोगेषुइतरतःआदिकवयेआदिकविमाराध
यितुंस्वेननिजेनधाम्नाभार्ययासह यथायथावत्दशमीवेधरहितंब्रह्मसांवत्सरिकमेकादशीव्रतरूपंब्रह्मतपस्तेनेयत्रनिर्वेधव्रतेसूरयःकृतशा

स्त्राभ्यासाअपिमुह्यंतिदशमीविद्धमेवाद्रियंतइतिभावः । केनमृषाधाम्नाव्यर्थधारणाभ्यासेनवैष्णवशास्त्रजनापरिशीलनान्मुधाहठंकुर्वं
तीत्यर्थः । आरिराधयिषुःकृष्णंमहिष्यातुल्यशीलया ॥ युक्तःसांवत्सरंवीरोदधारद्वादशीव्रतमित्युक्तेः । द्वादशीत्युक्तेर्दशमीवेधरहितामिति
प्रतीयते । दशमीवेधश्चबहुधाचार्यैर्वर्णितः।केचिदर्द्धरात्रतोवेधंकेचिच्चत्वारिंशद्घटिकातःकेचित्पंचाशद्घटिकातःकेचित्पंचपंचाशद्घटि
कातःकेचिदरुणोदयतःकेचिच्चसूर्योदयतोवेधमामनंतीति । तथाहिस्कान्देरुद्रवाक्यम् । एकादशीयदापुत्रचतुर्वेधविवर्जिता ॥कर्त्तव्या
साप्रयत्नेनचतुर्वर्गफलप्रदा ॥ स्पर्शःस्याद्घाणनिगमैःसंगःपञ्चाशतामतः ॥ पञ्चपञ्चाशताशल्योवेधःषष्टयासतांमतः ॥ स्पर्शस्यघटि
काःपञ्चपञ्चसंगस्यपञ्चच ॥ स्पर्शस्यपञ्चवेधस्यैवंवेधोहिचतुर्विधः ॥ सस्पर्शाकुलनाशायससंगाधर्मनाशिनी ॥ सशल्याचैवकामघ्नी
सवेधामोक्षहानिदा ॥ किंच मद्दिनंसाधयिष्यंतिविंशदोषविवर्जितम् ॥ कलौयेभगवद्भक्तास्तेयांतिपदमव्ययम् ॥ प्रीणनायमुकुंदस्यवैष्ण
वानांहितायच ॥ तत्वंविलोक्यविद्वद्भिर्विंशदोषाःप्रकीर्त्तिताः ॥ व्यालमुखीमहाव्यालाभयाचैवमहाभया ॥ वज्रातिवज्रारौद्राचमहारौद्रा
सुरीतथा ॥ वंध्याचैवमहावंध्याछायाग्रस्तातथैवच ॥ वेध्यातिवेध्याविज्ञेयामहावेध्यातथैवच ॥ प्रलयाचमहापूर्वामहाघोरातथापरा ॥
संपूर्णाराक्षसीचैवविंशदोषाःप्रकीर्त्तिताः ॥ एतैर्दोषैःसंयुताचेद्दशमीदृश्यतेकलौ ॥ तदासानैवकर्त्तव्यामहाभागवतैर्नरैः ॥ चत्वारिंशन्ना
डिकातोधिकाचेद्दशमीतिथिः ॥ तदैतेविबुधैर्दोषाविज्ञेयानाडिकाक्रमात् ॥ एतच्चवैष्णवमात्रसाधारणमस्ति । निंबार्कानुयायिनस्तुअ
र्द्धरात्रमतिक्रम्यदशमीदृश्यतेयदि ॥ कपालवेधंतंप्राहुराचार्यायेहरिप्रियाः ॥ इति । माध्वास्तु अरुणोदयकालेतुदशमीदृश्यतेयदि ॥
साविद्धैकादशीत्याज्यापापमूलमुपोषणमिति ।भविष्ये दशमीशेषसंयुक्तोयादिस्यादरुणोदयः ॥ नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमिति
गरुडोक्तेश्च । उदयात्प्राक्चतस्रश्चघटिकाअरुणोदयइतिमाधवः । सूर्योदयेयदाराजन्विकलैकापिदृश्यते ॥ दशमीतत्रवेधस्स्या न्नोपो
ष्यासाहरिप्रियैरितिपुराणांतराच्च । मार्कंडेयस्तु बहुवाक्यविरोधेनसंदेहोजायतेयदा ॥ द्वादशीतुतदाग्राह्यात्रयोदश्यांतुपारणम् ॥ दश
मीविद्धायाःप्रायश्चित्तश्रुतेःसातुकदापिनोकार्या । प्रायश्चित्तमाहहेमाद्रिःअज्ञानाद्यदिवाज्ञानात्कुर्वंत्येकादशींनराः ॥ दशमीशेषसंयुक्तांप्रा

यश्चित्तमिदंचरेत् ॥ कृच्छ्रपादंसवत्सांगांत्रिंशद्विप्रांश्चभोजयेत् ॥ कुर्याद्दद्यात्तिलद्रोणंसुवर्णंचतथाददेदिति । एकभक्तेननक्तेनतथैवायाचि
तेनच ॥ उपवासेनदानेननिर्द्वादशिकोभवेदिति ॥ मार्कंडेयःमध्याह्नांत्यदलेत्रिभागदिवसेस्यादेकभक्तंमुनेइति । स्कांदे मुहूर्तोनंदिनंन
क्तंप्रवदंतिमनीषिणः ॥ नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपेति । शिवः नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः ॥ यतिश्चविधवाचैवकुर्या
त्तत्सदिवाकरमिति । किंचएकादशीयदायुक्तारविभौमार्कसंक्रमैः ॥ तस्यास्तदोपवासंचनकुर्यात्पुत्रवान्गृहीतिमाधवः । शयनीबोधिनी
मध्येयाकृष्णैकादशीभवेत् ॥ सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचन ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः ॥चातुर्मास्येपिकृष्णाया
उपवासोनपुत्रिणइति । उपवासनिषेधेतुभक्ष्यंकिंचित्प्रकल्पयेत् ॥ नदुष्यत्युपवासःसउपवासफलंलभेत् ॥ भक्ष्यमप्युक्तंवायुना नक्तं
हविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुवाज्यम् ॥ यत्पंचगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेति । हविष्यंतु हैमंतिकंसितास्वि
न्नंधान्यंमुद्गायवास्तिलाः ॥ कलायकंगुनीवारवास्तूकहिलमोचिकाः ॥ षष्टिकाःकालशाकश्चमूलकंकेमुकेतरत् ॥ कन्दःसैंधवसामुद्रेगव्येच
दधिसर्पिषी ॥ पयोनुद्धृतसारंचपनसाम्रहरीतकी ॥ पिप्पलीजीरकंचैवनागरंगंचतिंतिणी ॥ कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ॥
अतैलपक्वंमुनयोहविष्याणिप्रचक्षतइतिभविष्ये । सितमस्विन्नमनूष्मपक्वंधान्यंतंडुलाइत्येकमेवकलायःमटरीति । एकादशीविस्मृतौतु
एकादशीविलुप्ताचेत्द्वादशीपरतःस्थिता ॥ उपोष्याद्वादशीतत्रयदीच्छेत्परमंपदमित्यलंप्रसक्तानुप्रसक्तेन । प्रकृतमनुसरामः । यत्रांबरी
षेत्रायतेसर्वंशास्त्रोपदेशेनेतित्रिर्विप्रः । त्रायतेर्डिरत्र । सृज्यतेत्यज्यतइतिसर्गःशापोदण्डोवात्रेःसर्गास्त्रिसर्गोमृषाभूत् । किंभूतास्त्रिसर्गः
नाविनिमयोव्याघातोयस्यसोऽविनिमयः । नास्पृशद्ब्रह्मशापोपियंनप्रतिहतःक्वचित् ॥ नप्राभूद्यत्रनिर्मुक्तोब्रह्मदण्डोदुरत्ययइत्युभय
विधोक्तेः । यश्चनबिभ्यतीतिअभियोदैत्यास्तान्जानातिहिनस्तीत्यभिज्ञःसुदर्शनोदेवः । मारणतोषणनिशामनेषुज्ञेत्युक्तेर्ज्ञोहिंसार्थे
प्यस्ति । बलंप्रविष्टोजितदैत्यदानवान्वृक्णन्नजन्नामित्युक्तेः । तस्यान्वयात्स्तुतिरूपसेवनात्जन्माद्यस्यब्राह्मणस्य । षष्ठीद्विती
यार्थेज्ञेयाऽर्थवशाद्विभक्तिलिंगवचनानांविपरिणामइतिवैयाकरणोक्तेः । ब्राह्मणंनिरस्तकुहकंविगतदुःखंतेनेसदासर्वदाहृदाप्रीत्या ।

यद्यस्तिस्विष्टंदत्तंवास्वधर्मोवास्वनुष्ठितः ॥ कुलंनोविप्रदैवंचेद्द्विजोभवतुविज्वरः ॥ सुदर्शननमस्तुभ्यंसहस्राराच्युतप्रिय ॥ सवा
स्त्रघातिन्नविप्रायस्वस्तिभूयाइडस्पतइत्याद्युक्तेः ॥ किंभूतंपरंसत्यंसतांप्रियंसाधूनांहृदयंत्वहमित्युक्तेः । अत्रतेनेयोयत्रेत्यादिपदा
नामन्वयोयथेच्छम् ॥ ४७ ॥ ९ ॥ अथेक्ष्वाक्वादिचरितमाह ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वऽभिज्ञः
स्वराट् तेने ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषाधाम्ना स्वेन
सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४८ ॥ ६ ॥ यतोयस्याद्यस्यमनोःअन्वनुमुहुर्मुहुरयतेप्राणोबाहिर्येनतदन्वयंघ्राणंतस्मात्जन्मसइ
क्ष्वाकुः।क्षुवतस्तुमनोर्जज्ञेइक्ष्वाकुर्घ्राणतःसुतइत्युक्तेः।शक्तिग्रहंव्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्यशेषादित्यादिता
र्किकादिसंमतेरन्वयशब्दस्यघ्राणेपिशक्तिरस्तीति।यतइत्युक्तेस्ततइत्युपस्थीयते । ततइक्ष्वाकोरन्वयाद्वंशादितरतइतरेबहवआसन्तेष्व
पियत्रत्रयाणांधाम्नांपुरंजयेंद्रवाहककुत्स्थेत्येवंरूपाणांसर्गोमृषासआसीत् । पुरंजयस्तस्यसुतइंद्रवाहइतीरितः॥ ककुत्स्थइतिचेत्युक्तेः ।
किंभूतःअभीन्दैत्यादींजानातिहिनस्तीत्यभिज्ञः । यमायभल्लैरनयद्दैत्यान्येभियमुर्मृधइत्युक्तेः । ततोयआदिकवयेउतंकायब्रह्मसुखंतेने
सधुन्धुमारोभूत् । यःप्रियार्थमुतंकस्यधुंधुनामासुरंबलीत्याद्युक्तेः । ततोन्वयाद्यःस्वेनधाम्नाभार्ययाइतरतोविरक्तोवनेब्रह्मयज्ञमर्थेषुपुत्रार्थंते
नेसयुवनाश्वोभूत् ॥ किंभूतःस्वेनैवराजतेनतुसंतत्येतिस्वराट् । युवनाश्वोभवत्तस्यसोनपत्योवनंगतः ॥भार्याशतेननिर्विण्णऋषयोस्यक्ट
पालवः ॥ इष्टिंस्मवर्तयांचक्रुरित्युक्तेःमुहिमोहेसतिअंतितत्कालमेवतेजोवारिपुंसवनजलमायेप्रापार्थात्पपौकयाब्रह्महृदाभगवदाज्ञया । पी
तंपुंसवनंजलम् ॥राज्ञापीतंविदित्वाथईश्वरप्रहितेनेत्याद्युक्तेः । यत्सूर्युवनाश्वपुत्रोमांधातामृदांभूमिंयद्धाम्नायत्तेजसायथायथावत्सदान्वशास
त्तंपरमंवासुदेवंधीमहि । यौवनाश्वोथमांधाताचक्रवर्त्त्यवनींप्रभुः ॥ सप्तद्वीपवतीमेकःशशासाच्युततेजसेत्युक्तेः । किंभूतोयुवनाश्वःनवि
निमयोविपर्यासोयस्यसोविनिमयःतदुदरात्पुत्रेजातेपिनमृतइत्यर्थः । नममारपितातस्येत्युक्तेः । किंभूतोमांधाताअमिंद्ररूपंवासुदेवंया ति
स्तन्यार्थमित्ययः । देवानामस्मिवासवइत्युक्तेः । कंधास्यतिकुमारोयंस्तन्यंरोरूयतेभृशम् ॥ मांधातावत्समारोदीरिंतींद्रोदेशिनीमदा

दित्युक्तेः । किंभूतंपरंनिरस्तोनिजानांयुवनाश्वमांधात्रादीनांकुहकःस्वोदरभेदमात्रभावादिरूपोयेनसतथातम् । इहापियतस्तेनेऽन्वया
द्यत्तत्सम्बंधस्ययथेच्छताऽन्वशासदितिक्रियाध्याहृतिश्चबोध्या ॥ ४८ ॥७ ॥ अथसौभर्युपाख्यानमाह ॥ जन्माऽऽद्यस्य यतो ऽन्वयादि
तरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाऽऽय आदिकवये मुह्यंऽति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४९ ॥७ ॥ यतोयस्यजन्मआद्यस्यब्रह्मणोऽन्वयाद्वंशात्ससौभरिस्तेजोवारियमुना
जलेब्रह्मतपस्तेने । किंचआद्यस्यअत्तुंयोग्यस्यमत्स्यस्यहेतोःआदिरेवादिकोविष्णुस्तस्यविःपक्षीआदिकविर्गरुडस्तस्माआदिकवयेमृ
दांशापंतेने । यमुनांतर्जलेमग्नस्तप्यमानःपरंतपइत्युक्तेः । अत्रप्रविश्यगरुडोयादिमत्स्यान्सखादाति । सद्यःप्राणैर्वियुज्येतेत्याद्युक्तेश्च ।
किंचयस्मान्मांधातुःसुवतइतियत्सुवस्तासांरयःप्रवाहःसमूहोयतोयंसौभरिमायेप्राप । वृतश्चराजकन्याभिरेकःपंचाशतावरइत्युक्तेः । यत्र
मांधातरित्रयाणांपुरुकुत्सांबरीषमुचुकुंदाह्वानांपुत्राणांसर्गोऽमृषा । शशबिंदोर्दुहितरिबिंदुमत्यामधान्नृपः॥ पुरुकुत्समंबरीषंमुचुकुंदंचयोगि
नमित्युक्तेः । सस्वराट्सप्तद्वीपेशोपियतोविनिमयोविगर्वोभूत् । यद्वार्हस्थ्यंतुसंवीक्ष्यसप्तद्वीपवतीपातिः॥ विस्मितःस्तंभमजहात्सार्वभौम
श्रियान्वितइत्युक्तेः।किंचार्थेषुविषयेषुमहिमोहेसातिअतिशीघ्रमेवइतरतोविरक्तःसन्स्वेनधाम्नाभार्याभिर्यंपरमंवासुदेवमायेतंसदाधीमहि ।
किंभूतःअभिज्ञःगृहस्थादिपरिणामज्ञः । अहोइमंपश्यतमेविनाशमित्याद्युक्तेः । किंकृत्वाहृदामनसायथोचितंविमृश्येतिशेषः । एकस्त
पस्यहमर्थांभासिमत्स्यसंगात्पंचाशदासमुतेत्याद्युक्तेः । विरक्तोन्यासमाश्रितः॥वनंजगामानुययुस्तत्पत्न्यःपतिदेवताइत्युक्तेश्च । आत्मा
नंयुयोजपरमात्मनीत्युक्तेश्च । किंभूतंयंनिरस्तानांदेवानामपिकुहकंविस्मापकं । सुरस्त्रीणामपीप्सितमित्युक्तेः । सौभरिविशेषणमिद
म् । अत्राद्यस्ययतआयइत्यादिपदानांयथेष्टंसंबंधः ॥ ४९ ॥ ७ ॥ अथमांधातृवंशहरिश्चंद्रचरितमाह ॥ ॥ जन्माद्यस्य य
तोऽ न्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथा ऽविनिमयो य
त्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्त कु ह कं सत्यं परं धीमहि॥ ९० ॥८॥ ॥ यतोयस्यमांधातुरन्वयादितरतइतरेत्रसद्दस्युहर्य

श्चारण्यारुणनिबंधनादयआसन् । यत्रत्रयाणांपित्रपरितोषगुरुगोवधाप्रोक्षितोपयोगानांशंकूनांदुःखहेतूनांसर्गोऽमृषा सत्रिशंकुश्चासयत्सू त्रिशंकुसुतोहरिश्चन्द्रःअयोहरिभक्तःस्वराट्अनपत्यःब्रह्मयज्ञंतेनेहृदामनसाजन्माद्यस्यनारदस्यान्वयात्संबंधात् । सोनपत्योऽत्रिषण्णा त्मानारदस्योपदेशतः ॥ वरुणंशरणंयातःपुत्रोमेजायतांप्रभोइत्युक्तेः । यश्चहरिश्चंद्रआदिकवयेविश्वामित्रायसत्यंप्रतिज्ञातमयुतहिर ण्यशकटदक्षिणारूपंद्रव्यमविनिमयोविनिमयोवैक्लव्यंतद्रहितस्सन्तेनेददौ । यश्चधाम्नापत्न्यास्वेनपुत्रेणतेजोवारिगंगासमीपेऽर्थात्का श्यामर्थेष्वर्थार्थंतथामृदांदुःखमन्वयाद्यथाइतरतइतरेतच्छ्रुत्वैवमुह्यंति । अहोअस्यधैर्यंभार्यापुत्रौविक्रीयसत्यपालनार्थमात्मानमपिश्वप चराजायसमर्प्यशववस्त्रापहारितांमहाराजः कथंकरोतीतिविखिन्नाभवंतीतिभावः। यश्चाभिज्ञःसर्वज्ञाद्विश्वामित्रात्निरस्तकुत्यक्तभूमंडलंय थातथाहस्फुटंयत्कंसुखरूपंब्रह्मायेतत्परंधीमहीति। विश्वामित्रोभृशंप्रीतोददावविहतांगतिमित्युक्तेः। अत्रतेनेऽन्वयादितरतोयतइत्यादि पदानांयथेच्छंसंबंधः ॥ ९० ॥ ९ ॥ अथतद्वंश्यसगरभगीरथचरितमाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादि तरतश्चा ऽर्थेष्वऽभि ज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽद्य आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वा ऽरिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ९१ ॥ १० ॥ यतोयस्यान्वयादितरतइतरेहरितरोहितचंपसुदेवभरुकबाहुकादयआसन् । यत्रत्रां तींद्रियारातिभ्यइतित्रयः। यद्वातरंतींद्रियारातीनाभिरितित्रयःस्त्रियः। त्रातेर्डिस्तरतेर्डिश्चौणादिकः । यामाश्रित्येंद्रियारातीन्दुर्जया नितराश्रमैः ॥ वयंजयेमहेलाभिर्दस्यून्दुर्गपतिर्यथेतिकश्यपोक्तेः । तासांसर्गोनिश्चयोगर्भनाशनरूपोमृषासीत्ससगरश्चास । आज्ञाया स्यैसपत्नीभिर्गरोदत्तोंधसासह ॥ सहतेनैवसंजातःसगराख्योमहायशाइत्युक्तेः। यश्चब्रह्मयज्ञंतेनेयथायथावत्। सोश्वमेधैरयजतसर्ववेदसुरा त्मकमित्युक्तेः । किंकर्तुंआदिकविमाराधयितुं।यत्रयज्ञेस्वराडिंद्रःविनिमयोविपर्यस्तोभूदिति। तस्योत्सृष्टंपशुंयज्ञेजहाराश्वंपुरंदरइत्युक्तेः। यश्चारीणांमृदांवेपर्यस्तमरिमृदातांजन्माद्यस्यौर्वस्यहृदाज्ञयातेने । यस्तालजंघान्यवनान्शकान्हैहयबर्बरान् ॥ नावधीद्गुरुवाक्येनचक्रे विकृतवेषिणः ॥ मुण्डान्श्मश्रुधरान्कांश्चिन्मुक्तकेशार्द्धमुण्डितान् ॥ अनंतर्वाससःकांश्चिदबहिर्वाससोपरानित्युक्तेः । यत्सूरयोयत्पुत्रस

मूहः तेजोऽग्निमायेभस्मसादभवत् अभिज्ञःकपिलस्यधाम्नाप्रतापेन । प्रागुदीच्यांदिशिहयंददृशुःकपिलांतिके ॥ एषवाजिहरश्चौरआस्ते
मीलितलोचनः ॥ हन्यतांहन्यतांपापइतिषष्टिसहस्रिणः ॥ उदायुधाअभिययुरुन्मिमेषतदामुनिः ॥ स्वशरीराग्निनादग्धामहेंद्रहृतचेत
सः ॥ महद्व्यतिक्रमहताभस्मसादभवन्क्षणादित्युक्तेः । किंचयस्मात्सगरात्सूतआविर्भवतिप्रपौत्ररूपेणेतियत्सूर्भगीरथःअर्थेषुपितृद्धारार्थं
स्वानांभक्तानामिनःस्वेनःशिवस्सद्यतेप्राप्यतेऽनयेतिसद्भक्तिः । क्विबत्रसाधने।स्वेनस्यसत्स्वेनसत्तयाशिवभक्त्येत्यर्थः ।तेजोब्रह्मतत्प्रापकं
वारितेजोवारिश्रीगंगारूपंतेने । इदंहिगांगंत्यजतामिहांगंपुनर्नचांगंयदिवापिचांगम् ॥ करेरथांगंशयनेभुजंगंयानेविहंगंचरणेचगांगमि
त्युक्तेः । किंभूतंनिरस्तंकोर्भूमेरर्थात्तत्स्थानांहकंदुःखंयेनतत्तथातत् । श्रीगंगाभूगतान्सर्वान्पशुपाक्षिसरीसृपान् ॥ वैकुण्ठंप्रापयामास
नरान्दुःखविवर्जितमित्याद्युक्तेः । तपसातोषयच्छिवम् ॥ भगीरथःसराजर्षिर्निन्येभुवनपावनीम् ॥ यत्रस्वपितॄणांदेहाइत्याद्यु
क्तेः । यज्जलस्पर्शमात्रेणब्रह्मदण्डहताअपि ॥ सगरात्मजादिवंजग्मुःकेवलंदेहभस्मभिः ॥ किंपुनःश्रद्धयादेवींयेसेवंतेधृतव्रताइत्याद्यु
क्तेश्च। यत्रचसूरयःशास्त्रज्ञाअपिनास्तिकामुह्यंति । यदिगंगासर्वान्शोधयातितर्हिगंगास्नातयवनश्वपचाद्यैरपिब्राह्मणादीनांभुक्तिपानादि
व्यवहारोपिस्याद्यतोनास्त्यतोनसर्वशोधकाइत्यादितर्काकुलावंचिताभवतीतिभावः । यत्तद्गंगारूपं ब्रह्मद्रवंसत्यंतत्परंवयंधीमहि ।अ
त्रयत्सूरयःशब्दःसमस्तोव्यस्तश्चान्वेतितेनइत्यावृत्त्यासंबंधः ॥ यत्तदोश्चेति ॥ ९१ ॥ १० ॥ खट्वांगचरितमाह ॥ ॥ जन्माऽ
ऽद्यस्य यतोऽन्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनि
मयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ९२ ॥ ११ ॥ ॥यतोयस्यान्वयादाद्यस्यश्रीरामस्यजन्मस
खट्वांगोयत्रस्वर्गेत्रिगुणसर्गोमृषा।देवानांशुद्धसत्त्वानामित्युक्तेः। केवलसत्वसर्गोस्तितत्राये । किंभूतःब्रह्महृतब्राह्मणभक्तः। नमेब्रह्मकुलात्प्रा
णाःइत्याद्युक्तेः । किंचयत्रस्वर्गेसूरयोपींद्राद्याविनिमयोयथामुह्यंति । गुर्वाद्यवज्ञादिनातत्प्रसिद्धेः । आदिकवयेमूढसुखविस्तारवतिस्वर्ग
विशेषणमिदम् । यश्चस्वराट्स्वर्गतःतेजोवानांदेवीनामारमृदांयथातेनेस्वेनधाम्नाप्रभावेणअर्थेषुदेवराज्यसिद्ध्यर्थंअभिज्ञःआयुर्मानज्ञइ

तरतोविरक्तःसन्निरस्तकुहकंनिरुपाधिकंसत्यंतद्रूपंब्रह्मयच्चायेतद्वयंधीमहिसदा।अत्रापिपदानामावृत्त्यान्वयः॥९२॥११॥ अथास्मिन्वंशे रामलीलांवर्णयिष्यन्नादौजन्मादिविवाहांतांलीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वऽयादि तरत श्चाऽर्थे ष्वऽभिज्ञःस्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये ऽमुह्यंऽति यत्सूरऽयः ॥ ते ऽजो वारिमृदां यथा ऽऽवि निमयो यत्रऽत्रिसर्गो मृषा धाम्ना स्वेन सदा ऽनिरस्तकु ह कं सत्यं परं धीमहि ॥ ९३ ॥ १२ ॥ तमंवासुदेवरूपंपरंसदाधीमहि । अजस्तन्नामास्वराट्यद्यस्यदशरथस्यसूर्जनकस्ततोयस्यपरस्यतथाजन्मआसीत् । यथात्रिसर्गःसृष्टित्रयंमृषाभ्रातृचतुष्टयत्वेनप्रकाशात् । किंचद्व्येकयोर्द्विवचनैकवचनइत्यादिवत्त्रिशब्देन त्रित्वंलक्ष्यते । भरतादिभ्रातृत्रयवत्त्वादमृषासत्यः । अभिज्ञः कौशिकस्य । जानातेःक्विंतात्षष्ठचंतंपदम् । अर्थेषुयागरक्षादिषुतन्निमित्तंइतरतःमिथिलायामयात् । यत्रमिथिलायांतेप्रसिद्धानिमयोनिमिवंश्याराजानःसंति । अनुततःवारयतिशत्रूनितिवारि । ग्रहादेर्णिनिः आयुधानांधनुरहमित्युक्तेः । शत्रुनिवारणहेतुश्शस्त्रश्रेष्ठंधनुःप्रकरणाच्छैवंतन्मृद्नातीतिवारिमृत्तेनश्रीरामनाम्नापरेणकवयाईइतिपदद्वयं । ईलक्ष्मीःसीता । देवत्वेदेवतासाचमानुषत्वेतुमानुषीतिपराशरोक्तेः । अस्यस्त्रीई।लक्ष्मीरीकारउच्यतइत्येकाक्षरोक्तेः । कवयासुखविस्तारवतीआतेनेकृता । रयःवेगवान्आयआगतः । नास्तिब्रह्मब्राह्मणस्तज्जातिर्वापाल्यतयायेषांतेऽब्रह्माणःकार्त्तवीर्यादयस्तान्हरतीत्यब्रह्महृत्स्वेननाम्नातेजसावाराजतइतिस्वराट्परशुरामश्चआदिभक्षितःखंडितपराक्रमोविहितइत्यर्थः । यद्वावरदानादिनाऽऽविअंतितत्कालेप्रीतःकृतइत्यर्थः । अमुहिमोहरहितेयत्रपरस्मिन्स्वेनधाम्नाराज्येनवैभवेनवासातिवर्त्तमानेअनिरस्तकुउल्लसद्भूमण्डलंकंलीलासुखंचासीत् । हचार्थेआंस्मरणे ॥ ९३ ॥ २ ॥ वनगमनसुग्रीवानुग्रहांतलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभि ज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरऽयः॥ तेजो वारिमृदां ऽऽयथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्नास्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ९४ ॥ १३ ॥ तंपरंसदाधीमहियःजन्मनिआद्यस्यकरणस्यपितुर्दशरथस्यार्थेषुकैकेयींप्रतिसत्यपालनादिषुतन्निमित्तंस्वाभ्यांसीतालक्ष्मणाभ्यांराजतइतिस्वराड्ज्ञःपण्डितःरावणादिवधहेतुज्ञइतिवायःरामरूपीपरःनिरस्तकु

त्यक्तभूभोगंयथातथाइतरतोऽरण्यमयात् । गुर्वर्थेत्यक्तराज्योव्यचरदनुवनमित्यादेःयथात्रिसर्गास्त्रित्वजन्मातृतीयसंख्यांगत्वात् । यद्वा
त्रयाणांराज्यास्वीकरणरामानुगमनकैकेयीवचोनंगीकाराणांसर्गोनिश्चयोयस्यसतथाभरतःअयतीत्ययःनिवर्तनार्थंगतआसीत् । अनुत
तश्चस्वेनधाम्नाकन्दर्पसुंदरश्रीविग्रहेणहेतुनाअविनिमयोराक्षसाःखरादयोमृषामिथ्याऽभवन् । स्वलावण्यलब्धशूर्पणखाघ्राणच्छेदादिति
भावः ॥ यतइत्यत्रईअतइतिपदद्वयम् । अतएवअब्रह्महृदापराविमुखमनसाकिंवामृगाकृष्टरामागमनशंकयाब्रह्मणिपरेहृतत्यस्यतेनरा
वणेनकर्त्रीईलक्ष्मीःसीताआदिअकारादिकंआदिकमकमित्यर्थः । तस्यवयेदुःखातिशयेआंतेनेकृतेत्यर्थः । ततश्चरलयोरेकत्वात्वा
लिनंमृह्नातीतितथातेनवालिनंघ्नतापरेणसहतस्यसुग्रीवस्यसत्यमग्निसाक्षिकंसख्यम्अभिभयाभावःकंराज्यसुखंचाभूत् । ग्रत्यस्यसुग्री
वस्यतेजस्तन्मयस्सूर्यःसूर्जनकः ॥ ९४ ॥ १२ ॥ अथहनुमत्प्रेषणादिविभीषणाभिषेकांतलीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वया
दितरतश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंऽति यत्सूरयः ॥ तेजो ऽवारिमृदां यथा विनिमयो यत्र त्रिसर्गो
मृषा धाम्ना ऽस्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ९५ ॥ १३ ॥ ॥ जन्मनिजन्मकालेआद्यंभक्ष्यंजन्माद्यंतस्यसंबंधेन । रहस्य
मस्याःसमहन्महीपतिरित्यादौतस्यैअदर्शयदित्यादिवच्चतुर्थ्यर्थेत्वंसूरंसूर्यंयातीतिसूरयास्तस्मात्सूरयः । जन्मनिहनुमानुद्यंतंभानुंपक्व
फलबुद्ध्याभिययावितिरामायणे। यथानिरस्ताकुर्भूर्मिर्यस्मात्तत्कंजलंसमुद्रजलंतरतःप्लवमानात्प्रकरणाद्धनुमतःहेतोःअभिज्ञासीतालंकाया
मस्तीतिज्ञानंमुद्रिकादानात्शिरोमणिप्रेषणाचित्रकूटकाकवृत्तांतकथनप्रत्यभिज्ञावास्यास्तीत्यभिज्ञःस्वैःसुग्रीवाद्यैराजतइतिस्वराट्ऽयःपरः
कस्यजलस्यवयोविस्तारोयत्रतस्मिन्समुद्रेआलिंसेतुंमृह्नातिबध्नातीत्यालिमृत्।मृदिरत्रबंधनेरलयोरैक्यंपूर्ववत् । बभूवेतिशेषःस्वेनभवंती
त्यस्वाः परेशत्रवोराक्षसास्तेषामिनंस्वामिनंरावणंसीदतिप्राप्नोतीत्यस्वेनसद्तेनधाम्नास्थानेनलंकयासहअन्वयःसमीपगमनंतदादिअन्व
यादिसुवेलगिर्यारोहणादियतःप्राप्तात्परस्मादितिशेषःत्रिषुकालेषुत्रयोवासर्गाजन्मानिहिरण्यकशिपुरावणशिशुपालाख्यानियस्यसरावणः
मृषामिथ्यासीत्यत्यःपरःअर्थेषुसीतामत्रस्थांनेष्यामीतिआदिपूर्वंकृतंचसत्यंतेनेअमुहिमोहरहितेऽविनिरक्षकेयत्रपरस्मिन्मयतीतिमयः

शरणंगतः ब्रह्महृत्परभक्तः बिभीषणः अंतितत्क्षणमेवतेजोलंकाधिपत्यंआतेनेतंपरंधीमहि। यद्वाजन्माद्यस्यपुलस्त्यविप्रस्यान्वयात्पुत्राद्विश्र
वसोयतोयस्यरावणस्यजन्मतस्यतेजोवारिसमुद्रतटेऽर्थाल्लंकादेशेमृदांतेनेयः परः आदिकवयेबिभीषणायान्वयोवंशस्तदादिराज्यादिचतेने
तंसदाधीमहि। किंभूतः कवयेसमुद्रेतरतोहनुमतोहेतोरभिज्ञः सीतालंकायामस्तीतिज्ञानवान्। किंचयेनधाम्नाब्रह्मणिस्वस्मिन्हृन्मनोयस्याः
साब्रह्महृदासीताऽऽयेप्राप्ता। यत्ररामेऽविनिरक्षकेसतित्रयाणांदुर्भिक्षाल्पमृत्यसद्वचनानांसर्गोमृषासीत्। यथामयः मयपदेनमायाग्राह्यागो
भिः श्रिणीतमत्सरामितिवत्। यश्वस्वराट्यस्मिन्सूरयोवेदव्याख्यातारोपिरावणादयोमनुष्यदृष्टचामुह्यंतिनिरस्तकुहकंनिष्कपटंसत्यंसत्यप्र
तिज्ञंराममितियोज्यम् ॥ ९६ ॥ १३ ॥ अयोध्यागमनाद्यभिषेकांतलीलामाह ॥ ॥ जन्माऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्वभि
ज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथाऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेनसदा
निरस्तकुहकं सत्यं परं धीमहि॥ ९६॥ १४॥ उसंबोधनेहेभगवन्तत्वां परंधीमहि। मयालक्ष्म्याइतंप्राप्तंरतमानंदोयेनसतथास्वाभ्यांसीताल
क्ष्मणाभ्यांवास्वैः सुग्रीवाद्यैराजतइतिस्वराट्यः परः स्वस्यधनस्येनंकुबेरंसीदतीतिस्वेनसत्तेनधाम्नापुष्पकेणतत्रायात्। यत्रस्थानआद्यस्य
परस्यजन्मासीत्। अनुततोभिज्ञः सएवपरः कर्मभूतः ब्रह्महृदावासिष्ठेनकर्त्राऽर्थेषुमांगल्यादिविधिषुसत्सुतेजः साम्राज्याभिषेकशोभातथाऽवा
रिस्वीकारितः। ण्यंताद्वृणोतेः कर्मणिलुङ्॥ यथादिकवयेवेदप्रवर्तकायपरस्मैसूरयोमुह्यंतियंद्रष्टुंवाविचित्ताभवंति। किंचयत्रपरस्मिन्मृदांतदाधि
ष्ठात्र्याभूमेः अविनिपालकेसतित्रिसर्गः धर्मार्थकामसृष्टिरातेनेस्वयंविस्तृतः सतांआनिरस्तंकुहकंदुःखंयेनतंअंबासुदेवंधीमहीति॥ ९६॥ १४॥
अथश्रीरामवंशंनिमिचरितंचाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति
यत्सूरऽयः ॥ तेऽजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ९७ ॥ १९ ॥
॥ ॥ यतोयस्याः सीतायामृदांभूमेः सकाशाज्जन्मसायेनवारिमृदासमुद्रसेतुकारिणारामेणाऽऽयेतंपरंधीमहि। यत्रत्रयाणांमैथिलविदेहजन
केतिनाम्नांसर्गेनिश्चयोऽमृषासानिमिर्ब्रह्मयज्ञंतेने। निमयइतिबहुत्वंपूजार्थं। मैथिलोमथनाज्जातोविदेहस्तुविदेहजः ॥ जन्मनाजनकः

सोभूदित्युक्तेः।निमिरिक्ष्वाकुतनयोयज्ञमारभतात्मवानित्युक्तेः। यत्रयज्ञेस्वराट्निमिः आदिकवयेवसिष्ठायतेजस्तेजोवत्तापकरंशापंतेनेऽभि
ज्ञोवसिष्ठश्वमुह्यतिराज्यलक्ष्म्येतिमुट्राजातस्मिन्मुह्हिनिमौतेजस्तेनेअंतितत्क्षणमेव।अशपत्पततादेहोनिमेःपंडितमानिनइत्युक्तेः। तवा
पिपततादेहोलोभाद्धर्ममजानतइत्युक्तेश्व । यस्यचनिमेराद्यस्यमनोरन्वयाज्जन्मससूरिभिर्मुनिभिरर्थेषुजननिमेषोन्मेषार्थंयथाऽऽविरक्षि
तः। अर्यंतेज्ञायंतेरक्तपीतादिभेदेनद्रव्याणियैस्तेऽर्थानेत्राणितेषुकेनस्वेनधाम्नाप्रभावेणविदेहउष्यतांकामंलोचनेषुशरीरिणामित्याद्युक्तेः ।
यस्माद्रामात्सूतइतियत्सूःकुशोलवश्वांप्रसिद्धंब्रह्मणोवेदस्यहृदभिप्रायभूतंश्रीरामायणमध्येतुंआदिकवयेश्रीवाल्मिकियेऽन्वयात्प्राप । वे
दःप्राचेतसादासीत्साक्षाद्रामायणात्मनेत्युक्तेः । जातेजगतिवाल्मीकेकविरित्यभवत्पदमित्युक्तेश्ववाल्मीकिशिष्यावावांवाइत्युक्तेश्व ।
किंभूतःयत्सूरयोयुद्धेवेगवान् किंभूतंपरंसदासत्यं । किंश्वयस्यकुशस्यान्वयादितरतइतरेऽतिथ्यादिसुमित्रांताआसन् । कुशस्यचातिथिः
पुत्रइत्यारभ्येक्ष्वाकूणामयंवंशःसुमित्रांतोभविष्यतीत्युक्तेः । यद्वायस्यनिमेरन्वयादितरतइतरेउदावस्वाद्याःकृत्यन्तानृपाअनिरस्तकुअ
त्यक्तभूमंडलंयथातथाहस्फुटंकंब्रह्मसुखंलेभिरइतिशेषः। एतेवैमैथिलाराजन्नात्मविद्याविशारदाः॥योगेश्वरप्रसादेनद्वंद्वैर्मुक्तागृहेष्वपीत्युक्तेः
इहयत्सूरयइतिपदमावृत्त्यावग्रहेणवाविभक्तिविपर्यासेनवायोज्यंआदिकवयइतिच ॥ ९७ ॥ १९ ॥ चन्द्रवंशपौरुषप्रकाशनप्रसंगमाह ॥
॥ ॥जन्माद्यस्य यतो ऽन्वयादितरतश्चार्थेष्वभि ज्ञः स्वराट् तेने ब्रह्म हृदाय आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजो वारि मृदां य
था विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमाहि ॥ ९८ ॥ १९ ॥ तंपरंहृदासदाधीमाहि। ज्ञःबुधः
ग्रहः यस्यसूर्जनकस्तस्यपुरूरवसोन्वयात्वंशात्अरिमृदांशत्रुहंतॄणामायुनहुषययातिप्रभृतीनांराज्ञांस्वःस्वर्गमिंद्रसाहाय्यार्थमाटतीतिस्व
राट् । अयःशुभावहविधियुक्तःत्रिभिर्विद्याधनकुलैर्दमनामभिर्युक्तःसर्गः । शाकपार्थिवादिःसमासः । तएवहिसतांदमाइत्युक्तेः । वि
द्याधनकुलविशिष्टासृष्टिरासीत् । अस्यत्रिसर्गस्यसम्बंधिइतरतोऽन्येषांदुष्टानांजन्मात्तुंशीलमस्यास्तीतितज्जन्मादिसंहारकंअनिरस्तकु
पालितभूमंडलंअभिभयरहितंतेजऐश्वर्यंकवयेसुखातिशयेआदिकारणंब्रह्मतद्रूपःपरःयथायथावत्आतेनेप्राकाशयत् । यतःश्येष्वर्थेषुरक्षावि

जयादिषुअमृषाऽसह्येनवासत्येनस्वेनधाम्नाउपलक्षिताविनिमयोदेवाइन्द्राद्यामुह्यंतिकर्त्तुंनशक्नुवंतितंसत्यंकंसुखरूपंपरंसदाहृदाधीमहि ॥
॥ ९८ ॥ १६ ॥ अथपुरूरवसश्चरितमाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आ
दिकवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेनसदाऽऽ निरस्तकुहकं सत्यं परं
धीमहि ॥ ९९ ॥ १७ ॥ ॥ अथानंतरं केजलेवेतिगच्छतीतिकवयाअप्सराः । कवयाप्सरश्शब्दौपर्यायावेकार्थत्वात् । इइति
प्रसिद्धंआदिनानारायणेनोत्पादिताकवयाआदिकवयाउर्वश्यप्सरायतोयस्याअवावुरणकद्वयेनिमयःसंगोस्ति। एतावुरणकौराजन्न्यासौर
क्षस्वमानदेत्युक्तेः । निरस्तानाममराणामपिकुहकमतिसुंदररूपत्वात्पुरूरवसंतमायेहृदाप्रीत्या। पुनरर्थकोपिचोऽत्रोपमार्यांबोध्यः। तेन
ईअथेतिछेदःईलक्ष्मीःअंवासुदेवमिवमृदाअमितिछेदेऽयमर्थः । रूपद्रविणविक्रमान् ॥ श्रुत्वोर्वशींद्रभवनेगीयमानान्सुरर्षिणेत्युक्तेः । य
तःपुरूरवसःत्रयाणांवेदानामग्नीनांवर्णानांचसर्गोऽमृषा ॥ एकएवपुरावेदएकोग्निर्वर्णएवच ॥ पुरूरवसएवासीत्त्रयीत्रेतामुखेनृपेत्युक्तेः ।
यश्चतस्याअर्थेषु। घृतंमेवीरभक्ष्यंस्यान्नेक्षेत्वान्यत्रमैथुनात् ॥ विवाससमित्याद्यर्थेषुसत्यंतत्तथेतितेनेप्रतिपेदे । यश्चजन्मआद्यंनिःफलंय
स्यसजन्माद्योमूढसमुदायस्तस्यअभिज्ञः । संगंनकुर्यादसतांशिश्नोदरतृपांक्वचिदित्याद्युक्तेः । यस्मात्सूतइतियत्सूरायुस्ततःप्रवृत्तोरयो
नहुषनक्षत्रवृद्धादिरूपप्रवाहःतेजोमहदैश्वर्यमायेप्राप।याचाप्सराःवारिद्वैतवनसरस्तत्रमृद्नंतिमथ्नंत्यर्थात्सानुचरंदुर्योधनमितिवारिमृदाश्चि
त्ररथाद्यागंधर्वास्तेषांधाम्ना । प्राद्योतंतस्मविद्युतइत्युक्तेस्तत्कृतप्रकाशेनआप्रसिद्धंस्वेनमिंद्रंसीदतिप्राप्नोतीतिस्वेनसत् । आसेतिशे
षः। यद्वातेजोवारिशब्दौतदधिपपरौलक्षणयाबोध्यौ । तथाचतेजःशब्देनमित्रनामासूर्योवारिशब्देनवरुणश्चलक्ष्यते। मित्रावरुणयोर्मृदा
शापेनयापुरूरवसमायइतिसम्बंधः । मित्रावरुणयोःशापादापन्नानरलोकतामित्युक्तेः । यश्चइतरतोमुक्तसंगःसन्स्वेआत्मनिराजतइति
स्वराट्आत्मारामश्चसन्यद्ब्रह्मतद्रूपमापतंपरंधीमहि । उर्वश्यालोकनिःस्पृहः ॥ मुक्तसंगोमहीमेतामात्मारामश्चचारहेत्युक्तेः । किंभूतंब्रह्म
मुह्यामोहजनकायामायायाअंतोयस्मिंस्तन्मुह्यंति । इनत्रास्त्यर्थे । मामेवयेप्रपद्यंतेमायामेतांतरंतितइत्युक्तेः ॥ ९९ ॥ १७ ॥ अथ

नहुषादिचरितमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यं
ति यत्सूरऽयः ॥ ते ऽजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६० ॥
॥ १८ ॥ ॥ यश्चनहुषः स्वेनधाम्नायोगबलेनस्वराडिंद्रस्सन्हृदायःसर्पोभूत्मुहिमोहेसातिअंतिशीघ्रमेवअज्ञानादगस्त्यंपादेनपस्पर्शत
च्छापात्सर्पोभूदितिभारतेस्पष्टं । अर्थेषुचतुर्वर्गरूपेषुआद्यस्यधर्मस्यसकाशाद्यस्यजन्मसज्ञः सर्वज्ञःयुधिष्ठिरोयंअभिभयाभावंतेनेतत्कृतप्र
श्नोत्तरदानादिति।यत्सूर्ययातिःवारितत्समीपेकूपेमृदांमृद्वंगींदेवयानीमायेप्रापअनुपश्चात्आदिकवयेशुक्रायायात्अमृषाक्रोधेनयत्रययातौ
त्रिसर्गःत्रयःक्षत्रियवैश्यशूद्राःपरेयस्मात्सत्रिपरोविप्रस्तस्यसर्गस्त्रिसर्गः । मध्यमपदलोपीसमासः । विप्रशापःशुक्रशापस्त्वांजराविशतांमं
दैत्येवंरूपोविनिमयोविपर्यस्तोभूत्।व्यत्यस्यतांयथाकाममित्युक्तेः।इतरतउपरतोनिरस्तकुहकंनिष्कपटंयथायथावत्ततनोतिगृहकृत्यमिति
तभार्यातस्यैते । तनोतेःक्विप्टिलोपश्चोणादौप्रयोगमनुसृत्यप्रयोक्तव्याइत्युक्तेः । अजोबस्तोभूत्वाआत्मानमजंमन्यतइत्यजः । इहवैक
ल्पिकणित्त्ववानणूसर्वेष्वर्थेषुतद्धिताइत्युक्तेः । शृणुभार्गव्यमुंगाथांमद्विधाचरितांप्रिये ॥ बस्तएकोवनेकामीविचिन्वन्प्रियमात्मनः । दद
र्शकूपेपातितामित्युक्तेः । यश्चअयःवासुदेवपरःअनुयंसत्यंब्रह्मायात्तंपरंधीमहि । अन्वयादित्यावृत्त्यायोज्यम् ॥ ६० ॥ १८ ॥ अथदु
ष्यंतादिचरितमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति
यत्सूरऽयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६१ ॥ १९ ॥
स्वराट्दुष्यन्तःइतरतोवनेयस्यआद्यस्यआदौभवःआद्यःविप्रभावात्प्राक्तनःक्षत्रभावस्तत्रस्थस्यविश्वामित्रस्यसकाशाज्जन्म । विश्वामि
त्रात्मजैवाहमित्युक्तेः । तांमृदांमृद्वंगींशकुंतलांअर्थेष्वभिज्ञः । नहिचेतःपौरवाणामधर्मेरमतेक्वचिदित्युक्तेः । आये । अन्वयंवंशमततिसा
तत्येनगच्छतीत्यन्वयात्पुत्रःयतोदुष्यंतस्यान्वयात्आदिकविमाराधयितुंयथोचितंब्रह्मतेने । भरतोहरिप्रीतयेयज्ञंतेनेइत्यर्थः । ब्रह्मेत्येक
त्वंसामान्याभिप्रायेण । बहून्यज्ञांश्चकार । ईजेमहाभिषेकेणसोऽभिषिक्तोधिराट्प्रभुः ॥ तेजोवारिगंगायमुनयोस्तटे । पञ्चपञ्चाशता

मेध्यैर्गंगायामनुवाजिभिः ॥ सामंतेयंपुरोधायययमुनायामनुप्रभुः ॥ अष्टसप्ततिमेध्याश्वान्बबंधेत्युक्तेः । यद्येषुयज्ञेषुसूरयोपिमुह्यंति । भ
रतस्यमहत्कर्मनपूर्वेनापरेनृपाः ॥ नैवापुर्नैवप्राप्स्यंतिबाहुभ्यांत्रिदिवंयथेत्यद्भुताकुलचित्ताभवंति । यत्रभारद्वाजेत्रिसर्गोमृषामूढेभरद्वाज
मिमामित्युक्तेः । तस्योतथ्यममतोभयजन्यत्वात् । सचयतोयमाये । दत्तोयंवितथेऽन्वयइत्युक्तेः । यश्चस्वेनधाम्नाप्रभावेणनिश्चयेनास्तो
र्थाद्रवैर्येषांतेनिरस्तास्तेषांनिरस्तानांरसौकसांकुहकंदेवभार्याहरणादिकंनिरस्तकुहकमहरत् । यश्चविनिश्चीहरौनिमयःसंगोयस्यसत
थायंसत्यमायेतंसदाहृदाधीमहि । अरुदर्दितिशेषः । देवस्त्रियोरसांनिताःप्राणिभिःपुनराहरदित्युक्तेः ॥ ६१ ॥ १९ ॥ अथरंतिदेवनृ
पचरितमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽय आदिकवये मुह्यंति य
त्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६२ ॥ २० ॥ य
तोयस्याद्यस्यादिवर्णस्यभरद्वाजस्यान्वयाद्वंशाज्जन्मसदाअत्युदारोरंतिदेवःधाम्नाभार्ययास्वेनपुत्रेणआत्मावैपुत्रनामासीतिश्रुतेः । स्वरा
डिवनिपानखनित्रमिंद्रइत्युक्तेः । स्वराट् निष्किंचनःसन्यस्मिन्नन्नांबुत्यागेसूरयोपिमुह्यंतिव्याकुलीभवंतितत्जन्मदिनानिअप्राप्तइतिप
दद्वयंशेषःयथायथावत्अविनिमयःश्रद्धायुक्तः । काद्याष्टाद्यानवनवपाद्याःपञ्चप्रकीर्तिताः । यादयोष्टौनञ्ञौपूर्णेकेवलाश्चस्वराअपीतिकेर
लमतेनजन्मशब्दोऽष्टपञ्चाशद्वाचकोजायते । किंचांकानांवामतोगतिरित्युक्तेःकेरलमतेसंयुक्तवर्णेतवर्णोगृह्यते । तथाचजन्मशब्देज
शब्देनकादिगणनयाष्टसंख्योपस्थितिर्भवतिसंयुक्तेनकारमादिमंविहायांतिममकारेणपंचसंख्योपस्थितिश्चांकानांवामगत्यादावष्टावंतेपंच
तेनाष्टपंचाशज्जाताः । किंभूतंजन्माद्यस्यादिवर्णस्यमस्यनिरस्तंत्यक्तंकुककारोदितैकसंख्यायत्रतन्निरस्तकुकाद्यइत्युक्तेःककारएकवाच
कःपंचसंख्यातएकस्मिन्गतेचतुरंकमवशिष्यते । तेनचाष्टचत्वारिंशज्जायते । इहसस्वरएववर्णोगण्यतेनतुव्यंजनमपीति । तथाचाष्टाच
त्वारिंशद्दिनान्यन्नांबुअप्राप्तःसकुटुंबःआदिकवयेब्राह्मणायइतरतःवृषलायश्वभ्यःश्वपतयेपुष्कसायचतेजोवारिमृदांतेजःशब्देनघृतंवारिश
ब्देनपायसंजलंचमृदाशब्देनमृद्यतकटाहयंत्रेमुद्गराकारकाष्ठदंडेनेतिमृदासंयावःतेजोवारिभ्यांसहितामृदातेजोवारिमृदातांतथाब्रह्महृदास

र्वत्रब्रह्मबुद्ध्यातेनेददौ । निष्किंचनस्यधीरस्यसकुटुंबस्यसीदतः ॥ व्यतीयुरष्टचत्वारिंशदहान्यपिबतःकिल ॥ घृतपायससंयावंतोयंप्रा
तरुपस्थितम् ॥ अतिथिर्ब्राह्मणःकालेभोक्तुकामस्यचागमत् ॥ तस्मैसंव्यभजत्सोन्नमादृत्यश्रद्धयान्वितः । हरिंसर्वत्रसंपश्यन्नित्याद्यु
क्तेः । अथान्यइत्यारभ्ययातेशूद्रेतमन्योगादतिथिश्श्वभिरावृतइत्याद्युक्तेः ॥ पास्यतःपुष्कसोभ्यागदपोदेहीत्याद्युक्तेश्च । यत्ररंतिदेवेत्र
योगुणाःसर्गायस्यसत्रिसर्गःमायापदार्थःमृषासीत्मायागुणवतीतस्यस्वप्नवत्प्रत्यलीयतइत्युक्तेः । यश्चअभीन्देवान्जानातीत्यभिज्ञः ।
एतेदेवाममनोहनार्थमागताइतिजानन् । तस्यत्रिभुवनाधीशाआत्मानंदर्शयांचक्रुरित्याद्युक्तेः ॥ अर्थेष्विंद्रियार्थेषुइतरतःमुक्तसंगःयंसत्यं
कंसुखरूपंहस्फुटंपरंपरमात्मानमायेतंधीमहीति ॥ निस्संगोविगतस्पृहः ॥ वासुदेवेभगवतिभक्त्याचक्रइत्याद्युक्तेः । इहेतरतोजन्माद्य
स्येतिपदत्रयमावृत्त्यान्वेतीति ॥ ६२ ॥ २० ॥ अथशंतनुवंशचरितमाह ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वयादि तरतश्चाऽर्थेष्व
ऽभिज्ञःस्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषाधाम्ना स्वेन
सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६३ ॥ २१ ॥ ॥ ततोयस्यान्वयात्करस्पर्शरूपसंबंधात्जायतेवर्द्धतइतियास्कोक्तषड्भावावि
कारेष्वाद्यंजन्मैव । तथाचजन्माद्यंयस्यतस्यजन्माद्यस्यशरीरस्य।विनिमयोभवतिसशंतनुःवारिवाःशब्दोपलक्षितगंगायांतेजोवर्यितेने
पुत्रमुत्पादयामास । यंयंकराभ्यांस्पृशतिजीर्णंयौवनमेतिसइत्युक्तेः । शंतनोरासीद्गंगायांभीष्मआत्मवानित्युक्तेश्च । यश्चभीष्मोजन्माद्य
स्यपर्शुरामस्यतथामृदांयुद्धेपराजयंतेनेयथासूरयोमुह्यंति ।अहोसर्वक्षत्रभयकर्त्तुःपर्शुरामस्यापियुद्धेभीष्मोगर्वंहापयामासेतिविषण्णाभवंति
॥ प्रसिद्धमेतद्भारते । यश्चेतरतइतरस्मिन्कलत्रेइतरतइतरौविचित्रवीर्यचित्रांगदौचतेनेउत्पादयामास । शंतनोर्दासकन्यायांनाम्नाचि
त्रांगदःसुतः ॥ विचित्रवीर्यश्चावरजइत्युक्तेः । अत्रेतरतइतिपदमावृत्त्याव्ययत्वाद्यथेष्टंयोजितम् । यतोयदर्थमभिज्ञोव्यासात्त्रिसर्गस्त्र
याणांधृतराष्ट्रपांडुविदुराणामुत्पत्तिरासीत् । क्षेत्रेप्रजस्यवैभ्रातुर्मात्रोक्तोबादरायणः । धृतराष्ट्रंचपांडुंश्चविदुरंचाप्यजीजनदित्युक्तेः । या
भ्यांधृतराष्ट्रपांडुभ्यांसुवतइतियत्सुवःयुधिष्ठिरभीमार्जुननकुलसहदेवादुर्योधनदुःशासनादयःकर्णप्रतिविंध्यालक्ष्मणादयश्चतेषांरयःसैन्य

तत्प्रधानसमूहोविराटद्रुपदधृष्टद्युम्नशिखंडिरूपःशल्यविंदानुविंदादिरूपोवाऽमृषाक्रुधाअर्थेषुराज्याद्यर्थंमृदांनाशमन्वयात्। यत्रकलत्रेसत्य
वत्यांजन्माद्यस्यपराशरमुनेःस्वेनधाम्नातेजोंशेनस्वराट्परःजातइतिशेषः। कवयेनिजपुत्रायशुकायादिसनातनंब्रह्मतद्रूपंश्रीभागवतंतेने ।
यस्यांपराशरात्साक्षादवतीर्णोहरेःकला ॥वेदगुप्तोमुनिःकृष्णोयतोहमिदमध्यगामित्युक्तेः।तंव्यासरूपंसत्यंपरंह्रदाधीमहि। किंभूतंसतांयुधि
ष्ठिरादीनामासमंताद्वनगमनदुर्वासःप्राप्तिलाक्षामंदिराग्नियुद्धगतद्रोणभीष्मादिद्रौपदीकचस्पर्शगोहरणादिषुनिरस्तः कुहकःक्लेशोयेनतं ॥
यद्वायत्रमृदायांस्वराट्श्रीकृष्णःकवयेनिपुणायार्जुनायआदिसनातनंगीतारूपंब्रह्मतेने । यद्वास्वान्राजयतीतिस्वराट्भीष्मःआदिकव
येयुधिष्ठिरायब्रह्ममोक्षधर्मरूपंशांतिपर्वगंतेने । यद्वाआदिकवयेऽकारादिकवयेमूर्खायदुर्योधनायस्वराट्श्रीकृष्णःअर्थाःसत्यायेइषवस्तद
भिज्ञोद्रोणोभीष्मश्चकृपश्चविदुरश्चसत्यंयथार्थंधर्माविरुद्धंनीतिशास्त्रंचतेनइति । इहान्वयाज्जन्माद्यस्ययत्रेतरतइत्यादिपदानांयथेच्छंसं
बंधः ॥ ६३ ॥ २१ ॥ अथयदुवंशीयनृपचरितंविवक्षुःकार्तवीर्यस्यचरितमाह ॥ ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चा
ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म ह्रदा य आदिकवये मुह्यंति यत्सूरयः॥ तेजो वाऽरिमृदां यथाऽविनिमयो यत्र त्रिसर्गो मृषाधाम्ना
स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६४ ॥ २२ ॥ ॥ योयदुर्जन्माद्यस्यदत्तात्रेयस्यमुनेर्ब्रह्मायात्यतोयदोः त्रयाणां
पुत्राणांसर्गःमृषातस्यचतुःपुत्रत्वात् । यदोःसहस्त्राजितक्रोष्टानलोरिपुरितिश्रुताः ॥ चत्वारःसूनवइत्युक्तेः । चपुनर्यतोयस्ययदोरन्वयादि
तरेभ्योनृपेभ्योऽर्थेषुधनेषुअभिभयाभावंज्ञापयातेनिजस्मरणादिनेत्यर्थेष्वाभिज्ञःकार्तवीर्योऽभूत् । अलुक्समासः । अनष्टवित्तस्मरण
इत्युक्तेः । नह्यन्यराजस्मृत्या - नष्टवित्तताभवतीति । किंतुकार्त्तवीर्यार्जुनोनामराजाबाहुसहस्रवान् ॥ तस्यस्मरणमात्रेणहृतंनष्टंचलभ्य
तइतिमंत्रतोपितस्यैवतथात्वं। अब्रह्महृत्परद्वेषीविनिमयोराक्षसोरावणः। बहुत्वंविपरिणमनीयं। यद्यस्मात्तेजोवारिनर्मदातटेमृदांतिर
स्कारमाये । प्रसिद्धंचैतद्रामायणे । यत्रयदोरन्वयेवंशेसूरयोपिमुह्यंति । यदुवंशस्याद्विधाहरिवंशेप्रोक्तत्वात् । तिस्रःकोटचःसहस्राणाम
ष्टाशीतिशतानिच ॥ आसन्यदुकुलाचार्याःकुमाराणामितिश्रुतिरित्यादिवाक्यतात्पर्यावधारणासामर्थ्याद्वा । यःस्वराट्स्वरेणभुग्भुगिति

शब्देनाटतिगच्छतीतिस्वराट्वह्निःस्वेनधाम्नातेजसाआदिकवयेअतिविदुषेयस्मैकार्तवीर्यायनिरस्तानांशत्रूणांकुहकंनाशंतेने । वसूनां पावकश्चास्मीत्युक्तेरग्निरूपंतंपरंसदासत्यंधीमहि ॥ ६४ ॥ २२ ॥ कार्त्तवीर्यप्रसंगात्पर्शुरामावतारलीलामाह ॥ ॥ जन्माद्यस्य य तो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा वि निमयो यत्र त्रिसर्गो मृषा धाम्नाऽस्वे न सदा निरस्तकुहकं सत्यं परं धीमहि॥ ६५ ॥ २३ ॥ ॥ उसंबोधनेतंपरंधीमहि । जन्मा द्यस्यब्राह्मणस्यभृगोरन्वयात्यस्यपर्शुरामस्यसूर्जन्मअर्थेषुचरुव्यत्ययादिषुसत्सुइतरतोऽन्यस्यक्षत्रियस्यआदिभक्षकंतेजःयताप्राप्तवता येनपरेणब्रह्महृत्स्वपितृजमदग्निब्राह्मणहंताऽभिज्ञःयोगित्वात्सर्वज्ञःआसमंतात्अयतेऽधर्मचिंतनक्षणेसर्वत्रगच्छतीत्यायःस्वराट्महारा जःकार्त्तवीर्यःरयोवेगवान्कर्मभूतःअमृषाक्रोधेनकवयेकबंधेग्रीवादेशेमृदांमर्दनंछेदनमारिप्रापितः ॥ ऋगतौण्यंतात्कर्मणिलुङ् । अनुअवि निमयोराक्षसाइवस्थितायेराजानस्तेतुयथायुद्धादौमुह्यंतिम्रियंतेतथातेनेकृतं । यत्रपरस्मिन्सदासत्यमस्तित्रिसर्गश्चन।किंभूतेऽस्वे नावि द्यतेस्वःस्वकीयोयस्यसतथातस्मिन् । भ्रातॄन्मात्रासहावधीदित्युक्तेः । कामलोभमोहाश्चात्रत्रिसर्गपदार्थः । धाम्नातेजसाऽस्वरूपेणनि रस्तःकोर्भूमेर्हकःकुहकोभूम्याच्छादकःसमुद्रोयेनतं । रामास्त्रोत्सारितश्चासीत्सह्यलग्नइवार्णवइतिमहाकव्युक्तेः ॥ ६५ ॥ २३ ॥ पुरूर वसोवंशेवक्तव्यमपिचरुव्यत्यासप्रसंगादत्रविश्वामित्रचरितमाह ॥ ॥ जन्माद्यस्य यतोऽन्वऽयादितरत श्चाऽर्थेष्वऽभिज्ञःस्वरा ट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ६६ ॥ २४ ॥ ॥ योविश्वामित्रःइतरतःक्षत्रियःसन्यतोयस्यजन्माद्यस्यब्राह्मणत्वस्यभावप्रधा नोनिर्देशः । अर्थेषुनिमित्तंब्रह्मतपस्तेनेऽनुपश्चात्तदयात्प्राप । किंभूतंततेजःक्षत्रशस्त्रादिजंवारयतीतितेजोवारि । गाधेरभून्महातेजाः समिद्धइवपावकः ॥ तपसाक्षात्रमुत्सृज्ययोलेभेब्रह्मवर्चसमित्युक्तेः । धिक्चमेक्षत्रियबलमहोब्रह्मबलंबलम् ॥ एकेनब्रह्मदण्डेनसर्वास्त्राणि हतानिमेइत्युक्तेश्च । यश्चादिकवयेवसिष्ठायमृदांदुःखंपुत्रनाशनंतेने । प्रसिद्धमेतद्भारते । युद्धंवामृदाशब्दार्थः । आदिकविमुद्दिश्येतित

त्रार्थः । यत्रविश्वामित्रेविनिमयोऽव्यत्यासश्वरोरितिशेषः । यथासत्यंजातःत्रिसर्गश्चमृषातस्यब्रह्मचरुक्षत्रवीर्योभयसर्गत्वात् । यश्चस्वेन
धाम्नातपोबलेनाभिज्ञः नभीःसंसारभयंययासाभिर्गायत्रीअन्यार्थेह्रस्वः । गायंतंत्रायतइत्येकार्थत्वात् । तांज्ञापयतिनियोजयतीत्यभि
ज्ञः । ज्ञानियोगेडप्रत्ययः । गायत्र्याविश्वामित्रऋषिरितिरुद्रधरोक्तेः । सर्वज्ञाःसर्वयोक्तारोब्राह्मणाऋषयोमताइत्युक्तेः । नन्वनादिभूता
यावेदमातुर्गायत्र्याःकथंविश्वामित्रस्ततोऽर्वाक्तनऋषिरभूदितिचेन्न । आधिकारिकब्रह्माद्युत्पत्तिवत्तेषामुत्पत्तिर्बोध्यातेषामप्याधिकारि
कत्वेनवेदबोध्यानादित्वमेवेतिनिश्चिनु । यद्यस्यविश्वामित्रस्यब्राह्मणत्वेसूरयोनमुह्यंतिनोतिशेषः । निषेधार्थकाकारप्रश्लेषोवा । किंत्वन
भिज्ञाएवमुह्यंतीतिभावः । पूर्वसिद्धमेवचरुजंब्राह्मण्यंतपसाव्यक्तमभूदितितात्पर्यम् । ब्राह्मणत्वंचब्राह्मण्याधिकरणकब्रह्मवीर्योद्भूतत्वब्रह्म
दत्तवरजातत्वतपोबलविप्राज्ञत्वब्रह्ममंत्राभिमंत्रितचर्वादिजन्यत्वान्यानियुक्तान्यक्षेत्राधिकरणकब्रह्मवीर्योद्भूतत्वान्यतमत्वं । ब्राह्मण्यधिक
रणकब्रह्मवीर्योद्भूतत्वस्यब्राह्मणत्वेऋष्यशृंगस्यब्राह्मणत्वंनसेत्स्यतितस्यमृग्यांविभांडकर्षिवीर्योद्भूतत्वात् । विश्वामित्रस्यापिगाधिक्षत्रि
यात्क्षत्रियायामेवतत्पत्न्यांजातत्वात्तन्नसंभविष्यति । व्यासस्यापिदासकन्यायांपराशरोद्भूतत्वात्तन्नसंभविष्यति । ब्रह्मवीर्योद्भूतत्वस्यब्रा
ह्मणत्वेतुधृतराष्ट्रादीनांब्राह्मणत्वंस्यात् । विश्वामित्रस्यतन्नायातिपूर्वोक्तहेतोरित्याशंक्यसमाधत्तेब्राह्मण्यधिकरणकब्रह्मवीर्योद्भूतत्वंत्वस्म
दादीनांब्राह्मणत्वं । ऋष्यशृंगस्यत्वन्यानियुक्तब्रह्मवीर्योद्भूतत्वंब्राह्मणत्वं । विश्वामित्रस्यब्रह्ममंत्राभिमंत्रितचरुजन्यत्वंब्राह्मणत्वं । व्यास
स्याप्यन्यानियुक्तब्रह्मवीर्योद्भूतत्वेनब्राह्मणत्वं । धृतराष्ट्रादीनांतुमात्रानियुक्तव्यासाज्जातत्वेनतन्नास्तीति । वीतिहोत्रस्यतुभृगोर्वचनजा
तंब्राह्मणत्वं । गोकर्णस्यापिब्रह्मदत्तफलरूपवरोद्भूतत्वाद्ब्राह्मणत्वं । ऋषभदेवपुत्राणामपिब्राह्मणत्वेब्रह्मदत्तवराद्यन्यतमत्वरूपंलक्षणंविचा
र्यमाणेसमन्वेत्येव । एवंयत्रयत्रक्षत्रियवंशेब्राह्मणोत्पत्तिस्तत्रतत्रैतल्लक्षणंयथाकथंचिदायाति । सूतस्यतुशौनकादिदत्तंब्राह्मणत्वमास्ति ।
बलदेवकृततद्धत्याप्रायश्चित्तश्रुतेः । अस्यब्रह्मासनंदत्तमस्माभिर्यदुनन्दन ॥ यद्येतद्ब्रह्महत्यायाःपावनंलोकपावनेत्युक्तेः । विश्वा
मित्रःयस्यस्वराट्निरस्तकुत्यक्तभूमंडलंहहर्षेयत्सत्यंसनातनंकंब्रह्माऽऽयेतत्परंधीमहि । सदासर्वदाहृदाचेतसेति ॥ ६९ ॥ २४ ॥

अथकृष्णावतारलीलामाह ॥ ॥ जन्माऽऽद्यस्य यतोन्वयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः॥तेजो वाऽरिमृदां ऽऽयथाऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६६ ॥ २९ ॥
॥ ॥ तंपरंधीमहि । आद्यस्यपरस्ययतोयस्मिन्वसुदेवगृहेजन्मासीत् । ततइतरतोव्रजंप्रतिअर्थेषुभक्तमनोरथसिद्ध्यर्थमयात्ययौ । अनुततःअरीन्कंसादीन्मृद्नातीत्यरिमृद् । किंचस्वैःरुक्मिण्यादिप्रियागणैःप्रद्युम्नादिपुत्रपौत्रादिभिरुद्धवादिपरिकरैर्वाराजतइतिस्वराट् अभिज्ञःयःब्रह्मवेदमार्गंतेने तेजोवा । वाशब्दश्चार्थे । तेजऐश्वर्यंचतेने । आदिकवयेयतयस्मैपरस्मैसूरयोनारदाद्यामुह्यंतियत्रयस्मिन्स तित्रिभिरर्थकाममोक्षैःसर्गःसंबंधोयस्यसधर्मश्चस्वेनधाम्नाऽर्जुनादिप्रभावेणयथायथावतअविनिमयोऽत्रिपर्यस्तोभूत । दुष्टसंहारभूभारहर णादिनाधर्मःस्थापितइत्यर्थः । अमृषासत्यस्वरूपंसतामुद्धवादीनांज्ञानोपदेशादिनाआनिरस्तंकुहकंसंशयोयेनसतंअंपरंहृदाधीमहिआं स्मृतौ।अस्मिन्पक्षेछेदाः ॥६६॥२९॥ इतिनवमस्कंधार्थदिग्दर्शनम्॥९॥ अथतत्रभवान्बादरायणःश्रीभागवतशास्त्रंलोकानुजिघृक्षयास्व चेतःप्रीतयेचप्रदिद्योतयिषुस्तत्रसर्गादिनवपदार्थावलंबनजीवातोराश्रयपदार्थभूतस्यश्रीकृष्णस्यजन्मादिमौशलांताएवततोभवान्दर्शय चेष्टितंविभोरित्यादिश्रीनारदगुरूपदेशदिशाकिंवाभागवताधर्माइत्यादिनावर्णनीयाअपिप्राधान्येनश्रीदशमेवितस्तारयिषुस्तत्रतावत्प्र थमस्कंधेजन्मादीतिपद्यमयींनांदींनिबध्नंस्तस्योद्देश्यतयाविषयतयावाप्रायःश्रीकृष्णलीलाबह्वर्थवैचित्र्यवैशिष्ट्येनवर्णयंस्तत्रादौजन्म लीलौपयिकंवसुदेवविवाहेकंसमोहनादिप्रसंगंचाह ॥ ॥जन्माऽऽद्यस्य यतो ऽन्वयादितरत श्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६७ ॥ १ ॥ तंपरंधीमहि । यस्यपरस्ययतोदेवक्याजन्मतस्यांदेवक्यांआज्जायमानाद्वासुदेवाद्धेतोःअर्थेषुदेवक्यावधादिनिमित्तंय स्यास्त्वामष्टमोगर्भइत्यादिवाक्याभिधेयेष्वभिज्ञःरतःविषयाभिलाषीस्वेषांपरज्ञानिनांयदूनांराट्राजाकंसःत्रयाणांद्रुमिलोग्रसेनतद्दाराणां सर्गःसंतानःअयोलोहमयंखड्गंतदादिआदिपदात्केशादिआदितआददे । खड्गपाणिःकचेग्रहीदित्याद्युक्तेः । अनुनयातीत्यया:तेनअयात

त्रस्थितेन । नञियातेःक्विप् । ब्रह्महृदाभगवन्निष्ठमनसावसुदेवेनअवारिवारिताःअनिरस्तकुहकंसकपटंयथातथापुत्रान्समर्पयिष्येस्या
इत्यादिनासत्यंचतेनेसदासर्वदाकस्यसुखस्यवयोविस्तारस्तस्मिंस्तन्निमित्तमित्यर्थः । यत्रसत्येसतिस्वोनभवतीत्यस्वःशत्रुस्तेनकंसेनमृ
दामर्दनाद्धेतोःयेविनिमयोदेवास्तेदेवक्यामुत्पन्नाःदेवाःकंजहसुर्वीक्ष्येत्युक्तेः । देवाःषट्पुत्राःकीर्त्तिमदादयःधाम्नाजन्मनामृषायथाआसन्।त
थाऽजःसंकर्षणश्चमृषासीत् । देवकीगर्भात्तिरोऽभूदित्यर्थः । यत्यस्मात्सूरयोपिपौरादयोमुह्यंतिविस्मयंतेअहोविस्रंसितोगर्भइतिपौराविचु
क्रुशुरित्यद्भुतंमेनिरे । आंस्मरणे ॥ ६७ ॥ १ ॥ अथब्रह्मादिभ्योवरदानलीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वऽयादि तरतश्चाऽर्थेष्व
ऽभिज्ञः स्वराट् तेने ब्रह्महृदाय आदि कवये मुह्यंति यत्सूरऽयः ॥ ते ऽजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा ऽधाम्ना
स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६८ ॥ २ ॥ ॥ तंपरंसदाधीमहि । मृदामृत्तत्वाधिष्ठात्र्याभूदेव्याधेनुरूपिण्याइत्यर्थः ।
अर्थेषुरक्षःकृतभारादिषुअभिज्ञःतत्सर्वंजानन्स्वराट्स्वयंभूःयद्वास्वैःशंकरमहेंद्रादिभिःसहराजमानःयतःप्रयतःततश्चभगवदुपस्थानभा
ग्योदयेनइतरतःप्राप्तसंतोषःत्रयाणांलोकानांसर्गोयस्मात्सात्रिसर्गोब्रह्मातत्रवारिसिंधुजलेलक्षणयातत्समीपेब्रह्मपरमेवहृदामनसाऽयात्मन
सिपरंदध्यावित्यर्थः । यत्रवारिअमृषासत्यंआद्यस्यवासुदेवस्यजन्मप्रादुर्भावोस्ति । अनुध्यानानंतरंअजःस्वेनधाम्नास्वरूपेणोपलक्षितः
सन्आदिकवयेब्रह्माणमुद्दिश्यनिरस्तकुहकांनेर्व्याजंयथातथासत्यंभूभारमहंसंहरिष्यामीतिप्रतिज्ञांतेने । यथातेसूरयःसर्वज्ञाब्रह्मादयोविनि
मयइतरतोऽपरेदेवाश्चमुह्यंतिहर्षविह्वलाभवंतीत्यर्थः ॥ ६८ ॥ २ ॥ अथजन्मादिलीलामाह ॥ ॥जन्माऽऽद्यस्य यतो ऽन्वयादितरतश्चा
ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना
स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ६९ ॥ ३ ॥ ॥ तंपरंसदाधीमहियःपरःकर्मभूतःब्रह्महृदा । आविवेशांशभागेनमनआनक
दुन्दुभेरित्युक्तेः।परमेवहृदिविदधतावसुदेवेनकर्त्रादेवक्यामेवातेनेतंयतःयांपरिहृत्य । ल्यब्लोपेपंचमी ।आद्यस्यज्येष्ठस्यबलदेवस्यजन्मा
विर्भावोऽमृषाइतरतोरोहिणीमयात् । अहोविस्रंसितोगर्भइत्याद्युक्तेः । अनुत्रिसर्गःत्रिभुवनकर्त्ताअर्थेषुवेदाभिधेयेष्वभिज्ञःस्वराट् । यत्र

स्वयमभूत्स्वराडित्युक्तेः । स्वयंभूर्ब्रह्माविनिमयइंद्राद्यादेवाःसूरयोनारदाद्यायेतेसर्वेआदिकवयेपरस्मैस्तोतुंयथामुह्यंतिहर्षाद्विचित्ताभवंति
तथातेनपरेणतेजःअवारिघ्टतंविस्तारितामित्यर्थः । ततश्चस्वेनधाम्नास्वप्रादुर्भावेनमृदांभूदेव्यानिरस्तंकुहकंभारदुःखंयेनतंअतःसत्यंसत्य
व्रतमित्यादिस्तुतिविषयंपरंधीमहि ॥ ६९ ॥ ३ ॥ अथगोकुलगमनमाह ॥ ॥ जन्माद्यस्य यतोऽन्वऽयादे तरतश्चार्थेष्वऽभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथाविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरऽऽस्तकुहकं सत्यं
परं धीमहि ॥ ७० ॥ ४ ॥ ॥ यतःयस्मैयंप्रतिकवयेजलविस्तारेमहावृष्टौसत्यांअर्थेषुतन्निवारणादिष्वभिज्ञः।अर्थोभिधेयरैवस्तुप्रयोजननिवृ
त्तिष्वित्यमरः । आदीत्यव्ययमादावित्यर्थे । आदौगमनारंभेस्वएवात्मैवराजतइतिस्वराट्स्वाविलासरूपश्शेषश्चायात् । शेषोन्वगाद्वारिनि
वारयन्फणैरित्युक्तेः । ततःब्रह्महृदाश्रीकृष्णंहृदिदधतावसुदेवेनयइतरतोन्यत्रतेजोवारिसूर्यसंबंधिजलेलक्षणयायमुनासमीपेमृदांभुवःस्वे
नधनभूतेनधाम्नाश्रीगोकुलेन।वृन्दावनंसखिभुवोवितनोतिकीर्त्तिमित्युक्तेः । उपलक्षितःतेनेक्तःतत्रानीतइत्यर्थः । यत्ययामाययासूरयोमु
ह्यंति । याविदुषोमोहयतीत्यर्थः । सामायायस्यपरस्यानुअनन्तरंयथाजन्मअततीतिजन्मात् प्राप्तजन्मासीत् । अदृश्यतानुजाविष्णो
रित्युक्तेः।ययात्रिभ्यःसर्गोजन्मयस्यसत्रिसर्गःद्रुमिलराक्षसादुग्रसेनपत्न्यांजातःकंसइतिहरिवंशेपितृद्वयान्मातृतश्चजातःकंसःअमृषाक्रोधेन
विनिमयःविपरीतचरितोभूत् । अपोथयच्छिलापृष्ठेस्वार्थोन्मूलितसौहृदइत्याद्युक्तेः।सतांव्रजवासिनामानिरस्तंकुहकंसर्वोपद्रवोयेनतंपरंस
त्यंधीमहि ॥ ७० ॥ ४ ॥ अथपूतनामोचनलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् ते
ने ब्रह्महृदा ऽऽय आदि कवये मुह्यंति यत्सूरऽयः ॥ ते ऽजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषाधाम्ना ऽस्वे न सदा
निरस्तकुहकं सत्यं परं धीमहि ॥ ७१ ॥ ५ ॥ ॥ आद्यस्यपरस्ययतोमातुर्यशोदायाहेतोर्जन्मासीत् । तस्याअर्थेषुतत्तुल्यवेषादिषु
अन्वयात्संबंधात् । सद्वेषादिवपूतनापीत्यादौमातृवेशस्यतत्रैवश्रवणात् । तच्छब्दस्यनिर्देश्यमानत्वात् । सापूतनाअसूनभिव्याप्यआ
सुआप्राणं । पुंसिभूम्न्यसवःप्राणाइत्यमरः । अभिविधावव्ययीभावः । प्राणानभिव्याप्यएनअकारपदवाच्येनपरेणाऽऽदिभाक्षिता । अद्

भक्षणेकर्मणिप्रत्ययः । प्राणैःसमंरोषसमन्वितोपिबदित्युक्तेः । पूतनात्वंप्रकाशयन्नाह । अनुभगवतःपानानंतरंनास्तिमृषाधामकल्पित
धात्रीवेशशरीरंयस्यास्तया । निजरूपमास्थितेत्युक्तेः। राक्षसरूपिण्यातेनेववृधे । किंचब्रह्मपरएवहृदियस्यास्तया । कृष्णंचतस्याउरसि
क्रीडंतमित्युक्तेः । यत्ययापूतनयाइतरतोव्रजबाह्यदेशेतिसृषुगव्यूतिषुस्थितःसर्गास्त्रिसर्गः । त्रिगव्यूत्यंतरद्रुमान् ॥ चूर्णयामासेत्युक्तेः ।
सर्गोत्रस्थावरद्रुमसृष्टिःमृदांदेहपातेनभंजनंतथाऽवारिप्रापितः । यथासूरयोव्रजवासिनोमुह्यंतिमथुरातआगतानंदाद्यावामुह्यंति । महदा
सीत्तदद्भुतम् ॥ श्रुत्वातन्निधनंस्वस्तिशिशोश्चासन्सुविस्मिताइत्याद्युक्तेः । किंवासूरयःपंडितावामुह्यंति । अहोबकीयमित्याद्युक्तेर्जिघां
सयामुक्तिलाभाद्विचित्ताभवंतीत्यर्थः । यत्रपरस्मिन्अभिज्ञःएतद्वृत्तांतंसत्यलोकेजानन्कस्यजलस्याविःपक्षीवाहनंहंसस्तस्मैआयातीत्या
यआगतःअतःस्वरंतरिक्षंभगवल्लीलादर्शनार्थमाटतीतिस्वराट्अजोब्रह्मातेप्रसिद्धाविनिमयोदेवाश्चमुह्यंतिसतांव्रजस्थानामानिरस्तंकुहकं
वियोगदुःखंयेनतंपरंधीमहि ॥ ७१ ॥ ९ ॥ शकटभंजनलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्व
राट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरयः ॥ ते ऽजो वा ऽऽरि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदाऽऽ
निरस्तकुहकं सत्यं परं धीमहि ॥ ७२ ॥ ६ ॥ ॥ अभिजानातीत्यभिज्ञास्तस्याभिज्ञः । क्विप् । सर्वरहस्यज्ञस्ययस्यपरस्ययतो
येषुदिनेषुजन्मादिनंदोत्सवादिलीलाअभवन्तेभ्यइतरतोन्यस्मिन्कालेऔत्थानिकसमयइत्यर्थः । सचत्रैमासिकइत्यर्थः। कदाचिदौत्थानि
ककौतुकाह्वइत्याद्युक्तेः । ब्रह्महृदाकृष्णासक्तचित्तेनपितृवर्गेणतद्रव्यमर्थेषुलोकव्यवहारनिष्पत्त्यर्थंस्वस्मिन्परस्मिंस्तदुपरिराजतइतिस्व
राट्उपरिष्टात्तेनेकृतं । शकटाधस्ताद्दशायामित्यर्थः । द्रव्यंविशिनष्टि । यत्रद्रव्येसदृढंविद्यमानंआरिचक्रं । जातावैक्यं । चक्रद्वयंअन्वय
मततिप्राप्नोतीत्यन्वयाद्वर्त्तते । किंचयत्रशकटेत्रयाणांलोहकाष्ठचर्मादिरज्जूनांसर्गोऽमृषासत्यः । एतावताशकटस्वरूपंलब्धं । ततश्च
अजःयःपरएवास्यशकटस्यस्वेनधाम्नाचरणरूपावयवेनेत्यर्थः । आनिरस्तकुस्फोटितभूमण्डलंयथातथामृदांमर्दनंभंजनंतथातेनेयथातेसू
रयोनंदाद्याव्रजवासिनःआदिकवयेपरस्मैतंद्रष्टुंविनिमयोविनिमेषाःसंतोमुह्यंति।इतिब्रुवंतोतिविषादमोहितानंदादयश्चेत्याद्युक्तेः । ततश्च

सत्यंनित्यस्वरूपंपुनःकंसुखरूपंहस्फुटंतंपरंधीमहि ॥ ७२ ॥ ६ ॥ तृणावर्त्तवधविश्वरूपदर्शनलीलामाह ॥ ॥ जन्मा ऽऽद्य ऽस्य यतोऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजो ऽवारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ७३ ॥ ७ ॥ ॥ अनुशकटभं जनानंतरंब्रह्महृत्आयइतिछेदः । ब्रह्मपरमेवहरतीतिब्रह्महृत्आयआगतः । अतःस्वःअंतरिक्षमाटतीतिस्वराट् । वात्यारूपधरो हरदित्युक्तेः । कृष्णंनभोगतइत्युक्तेश्च । तृणावर्त्तःमोहनंमुट् । मुह्यतेर्भावेक्विप् । तस्यांमुहिगलग्रहणान्मूर्च्छायांसत्यांअंतिनिकटे गलग्रहणानिश्चेष्टइत्युक्तेः । इतरतोव्रजभूमिंप्रत्ययात् । न्यपतत्सहबालोव्यसुर्व्रजइत्युक्तेः । यस्मात्सूरुत्पत्तिर्यस्यसयत्सूःरयोवेगश्च स्वेनपरेणआदिभक्षितःखंडितइत्यर्थः । तृणावर्त्तःशांतरयइत्युक्तेः । किंचेतिलीलांतरमाह । अस्यपरस्ययतोयशोदायाजन्मतस्या अर्थेषुतृणावर्त्तागमनदृष्टगौरवशंकापनोदादिनिमित्तंमृदांमृत्तिकानामासमंतात्अत्तीत्यादिभक्षकः । आङ्उपपदादत्तेर्णिनिः । क्लीबत्वमार्षं म् । अभिज्ञःसर्ववित्सएवपरःवारोवारणमस्यास्तीतिवारिनवारिअवारि । मत्वर्थीयइन् । अप्रतिहतंतेजऐश्वर्यंयथायथावत्आतेने वितस्तारकवयेसुखविस्ताररूपेयत्रपरस्मिन्अविनियमःअव्यातिक्रमःत्रिसर्गःत्रिगुणप्रपञ्चःअमृषासत्यआसीत् । धाम्नालीलाविग्रहेणहे तुनासतांभक्तानामानिरस्तंकुहकंदुःखंयेनतंपरंसत्यंधीमहि ॥ ७३ ॥ ७ ॥ यमलार्जुनभंजनलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां ऽऽयथा विनिमयो यत्र त्रि सर्गो मृषा धाम्ना स्वेनसदा ऽऽनिरस्तकु ह कं सत्यं परं धीमहि ॥ ७४ ॥ ८ ॥ ॥ यत्यस्यायशोदायाहेतोर्जन्मासीत् । तयामा त्राअर्थेषुनवनीतचौर्यादिषुयतःबद्धःअभिज्ञःदेवर्षिर्मेप्रियतमइत्याद्युक्तेस्तच्छापादिजानन्त्रयाणांगुणानांसर्गोनिर्मोक्षोयस्मात्सत्रिसर्गः । त्रिगुणबन्धनमोचकायेत्याद्युक्तेः सर्गःस्वभावनिर्मोक्षेत्याद्यमरोक्तेः । यःपरःआद्यस्य । अतोर्हतःस्थावरतामित्युक्तेर्जंगमापेक्षया प्रथमस्यअर्जुनस्यवृक्षत्वेनस्थावरस्यान्वयात् मध्येउलूखलबद्धस्यप्रवेशात्मृदामर्दनेनभंजनेनइतरतोजंगमस्यनलकूबरस्य ।तद्गच्छतंम

त्परमौनलकूबरसादनमित्युक्तेरेकस्यनिर्देशः प्राधान्यात् । तेजःवैकुण्ठदानाद्यैश्वर्यं । सिद्धावुपेत्यकुजयोरिवजातवेदाइत्युक्तेर्ज्योतिः
शरीरंतथातेनेयथाआदेःपरस्यस्वस्यकवये । कृष्णकृष्णमहायोगिन्नित्यादिनास्तुवतेनलकूबरायसूरयःपंडिताःविनिमयादेवामुह्यंति वि
स्मयन्तेकोसावहोधाम्नाजन्मना । धामदेहेगृहेरम्येस्थानेजन्मप्रभावयोरितिविश्वः । स्वस्यधनस्यइनंस्वामिनंकुबेरंसीदतिप्राप्नोतीतिस्वे
नसद् । स्मृतिःस्यान्मत्प्रसादेनेत्युक्तेर्ब्रह्महृत्परानिष्ठान्वितःस्वेनभ्रात्रामणिग्रीवेणराजतइतिस्वराट्नलकूबरः कर्ममृषामिथ्यानभवती
त्यमृषा। अव्ययत्वात्तृतीयात्वं। सत्येनयत्त्रयेनपरेण । अत्रापियत्रेत्यव्ययं । प्रयोजकेनपरेणआनिरस्तकुअभौमंकंवैकुंठसुखंअनुक्तंक
र्मअवारिवरणंकारितः। वृणोतेर्ण्यंताल्लुङ् । हरस्फुटंआंस्मरणेआचतंपरंसत्यंधीमाहि ॥ ७४ ॥ ८ ॥ वृन्दावनगमनवत्सबकवधलीला
माह ॥ जन्मा ऽऽद्यऽस्य यतो ऽन्वऽयादि तरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वाऽऽरि
मृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषाधाम्ना ऽस्वेनसदा ऽनिरस्तकुहकं सत्यं परं धीमहि ॥ ७९ ॥ ९ ॥ ॥ यत्रव्रजेत्रिसर्गःवृन्दा
वनंगोवर्द्धनंयमुनापुलिनानिचेत्युक्तेस्त्रिविधसृष्टिरस्ति । अस्यपरस्ययतोयत्रगोकुलेजन्मासीत्ततःअर्थेषूत्पातदर्शनादुपनन्दादिभिर्वि
चारेषुसत्सुस्वैःपित्रादिभीराजतइतिस्वराट् अभिज्ञःयःपरःइतरतःअन्यत्रतत्रव्रजेऽयात् ययौ यत्रत्रिसर्गइत्यत्रान्वयः । अनुप्रयाणानंत
रंवाशब्दश्चार्थेतेजोवावैभवश्चतेने । यत्येनपरेणआदिभक्षकःस्वस्येत्यर्थः । क्लीबत्वमार्षम्। अस्वेनंशत्रुभूतंदैत्यराजंकंसंसीदतीत्यस्वेनसद्
बकासुरःमृदांमर्दनमारिप्रापितः । यथादिकवयेभक्षकजलपक्षिणेबकायतंद्रष्टुंसूरयोमुन्यवतारभूतागोपाःमुह्यंति।तद्वीक्ष्यगोपालसुताविसि
स्मरे । तत्रसुर्वज्रनिर्भिन्नंगिरेःशृंगमिवच्युतमित्याद्युक्तेः । तथाऽब्रह्महृत्परविमुखःआयआगतःमृषाधाम्नाकल्पितमिथ्यावत्सरूपेण।अजा
गावोमहिष्यश्चेत्याद्युक्तेः।अविभिर्निमयःसंगोयस्यसोऽविनिमयःमेषाणामुपलक्षणत्वेनवत्सांतश्चारीवत्सासुरइत्यर्थः ।मृदामारिआनिरस्तः
कुहकःक्लेशोगोपानांयेनसतथातं । मुक्तंबकास्यादुपलभ्यदारकाइत्युक्तेः । तंपरंसत्यंधीमहि ॥ ७९ ॥ ९ ॥ अघासुरवधलीलामाह ॥
॥ ॥ जन्माऽऽद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञःस्वराट् तेने ब्रह्म हृदाय आदि कवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारिमृ

दां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ७६ ॥ १० ॥ ॥ अर्थेषुसुहृन्नाशादि
षु। एतेयदामत्सुहृदोस्तिलापइत्यादिनोक्तेषुअभिज्ञःव्रजपालगिलनंकुर्वन्नित्यर्थः। सुष्टुनराजतइतिस्वराट्अशोभनःहृदायातीतिहृदायः
उरगःअघासुरःआद्यस्यशब्दस्ययतआकाशाज्जन्मततइतरतोभूमौअन्वयात्व्याप। धराधरोष्ठोजलदोत्तरोष्ठइत्युक्तेः।शब्दस्याद्यत्वंतन्मा
त्रागणनापेक्षंआदिकारणंब्रह्मसपरःतस्याघासुरस्यमृदांनाशंतथातेनेयत्रपरस्मिन्त्रिसर्गोलोकत्रयसृक्ब्रह्मासूरयोनारदाद्याविनिमयोदेवा
श्चयथामुह्यंति। दृष्ट्वाघासुरमोक्षणंप्रभवतःप्राप्तःपरंविस्मयमित्युक्तेः। किंभूतेयत्रपुराणंब्रह्मसंमितामित्युक्तेर्व्यवहिताःछंदसीतिसूत्राद्यत्क
वयेइतिज्ञेयं। यस्यकंयत्कंतत्रवयोयस्यसयत्कवयस्तस्मिंस्तथा।तरसावव‍ृधेगलइत्याद्युक्तेः। स्वेषुभक्तेषुइनाःश्रेष्ठास्तान्स्वेनंस्वप्रभुंभग
वंतंवासीदतीतिस्वेनसद्तेनकर्त्रा। ज्योतिःस्वधाम्नाज्वलयद्दिशोदश ॥ प्रतीक्ष्यखेवस्थितमीशनिर्गमंविवेशतस्मिन्नित्याद्युक्तेः।
अमृषाधाम्नानित्यपार्षदशरीरधारिणाऽघासुरेणतेजःअवारिवृतःपरःसेवितइत्यर्थः। सतांव्रजवत्सबालानामानिरस्तंकृपामृतदृष्टिपाते
नकुहकंविषमोहोयेनतंपरंसत्यंसद्रक्षकंधीमाहि। सदेत्युभयत्रान्वायि ॥ ७६ ॥ १० ॥ ब्रह्ममोहलीलामाह ॥ जन्मा ऽऽद्यस्य यतोऽन्व
यादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र
त्रिसर्गो ऽमृषा धाम्ना स्वेनसदानिरस्तकुहकं सत्यं परं धीमहि ॥ ७७ ॥ ११ ॥ ॥ आत्तविराड्रूपान्नारायणाद्यस्यब्रह्मणोजन्मअर्थेषु
परस्यैश्वर्यपरीक्षणादिनिमित्तंव्रजवत्सबालान्निर्हृत्यसइतरतःस्वलोकंप्रतिअयातययौ। अनुवर्षानंतरंयतःस्वलोकंगच्छतःतस्यब्रह्मणःमु
हिमोहनिमित्तंस्वराट्स्वयमेवावर्षंसर्वरूपेणराजमानःअभिज्ञःब्रह्महृदयवित्मदैश्वर्यपरीक्षांकरोत्ययमितिज्ञानवानितिभावः। यःपरःअंति
निकटंशीघ्रंवातेजांसिचआपश्चआरआगमनंतद्वानारीवायुश्चमृद्तदधिष्ठात्रीभूश्चतासांद्वंद्वःउपलक्षणमाकाशस्यपञ्चभूतानांसम्बंधिना
धाम्नास्वरूपेणजातावैक्यंधामभिःब्रह्मतद्रूपिणींसृष्टिंतेनेप्राकाशयत्। एवंसकृद्ददर्शाजःपब्ररह्मात्मनोखिलानित्यादेः। तदेवविशिनष्टि।
अयःशुभावहविधिर्यत्सूर्यदुत्पन्नःयदुपास्त्यासर्वमंगललाभः। धनरत्नौघमाणिक्यतुरंगमगजादिकम्। ददातिस्मरणादेवमहामोक्षप्रदाय

कः ॥ सर्वमंगलदाताचेतिसंमोहनेशिवोक्तेः । यत्रब्रह्मणिपरेसब्रह्माविनिमयोनिर्निमेषश्चित्रप्रायोभूत्कंजलंतस्यवयेपक्षिणिहंसोस्थितइाति
शेषः । वयोविस्तारपक्षिणोरितिनिरुक्तिकोशात् । निजधोरणतोवतीर्येत्युक्तेःपूर्देव्यंतीवपुत्रिकेत्युक्तेः । त्रिसर्गोभूतेंद्रियदेवसृष्टिश्चामृषा
सत्यःयथावदासीत् । आत्मादिस्तंबपर्यंतैरित्युक्तेः । सत्यज्ञानानंतानंदमात्रैकरसमूर्तयइत्युक्तेश्च । स्वेनंभक्तप्रभुंसीदतिदंडप्रणामादिना
योब्रह्मातस्याऽऽनिरस्तःकुहकोमोहोयेनतंतत्स्तुत्युत्तरकालंतमनुगृह्णंतंतंसत्यंसर्वसत्यप्रवर्त्तकंपरंहृदामनसाआदिसर्वादिं । क्लीबत्वमार्षं ।
धीमहि ॥ ७७ ॥ ११ ॥ धेनुकवधविषजलपायिगोगोपरक्षालीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः
स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा
निरस्तकुहकं सत्यं परं धीमहि ॥ ७८ ॥ १२ ॥ ॥ अर्थेषुतालफलभक्षणरूपगोपमनोरथपूरणार्थंइतरतस्तालवनंप्रतियतःगच्छतः
अभिज्ञश्चतुरस्यजन्माद्यस्यज्येष्ठभ्रातुर्जन्मनाज्येष्ठत्वात्बलदेवस्यान्वयात्प्रहतपादधारणरूपसम्बंधात्आदिकवयेतंपरंहंतुंआयआगतः
रयःवेगवान्।अभ्यधावत्क्षितितलंसनगंपरिकंपयन्नित्युक्तेः। स्वरंफलानांपततांशब्दमित्याद्युक्तेस्तालफलपातशब्दंप्रत्याटतीतिस्वराट्द्य
द्वास्वैःस्वीयैःसम्बंधिभिस्सहराजतेइतिस्वराट्। ज्ञातयोधेनुकस्ययेइत्युक्तेः । ब्रह्मश्रीकृष्णंहर्त्तुंप्रहर्त्तुंशीलमस्येतिब्रह्महृत् । शीलेक्विप् ।
यत्रतालवनेसूरुत्पत्तिर्यस्यसयत्सूःधेनुकासुरःमृदांमारणंयेनपरेणयथातेनेप्रापितःतंपरंधीमहि । तथा।तेजोवारियमुना।ह्रदविशेषरूपेकालिय
ह्रदेतत्तीरेइत्यर्थः । मुहिविषजलपानान्मूर्च्छायांसत्यांअंतिनिकटेविनिमयोनिमेषहीनामृताःस्वजनाःत्रिसर्गः । अजागावोमहिष्यश्चेत्यु
क्तेः । त्रिविधपशुसृष्टिश्चयत्रपरस्मिन्स्थितेनेतिशेषः । स्वेननिजेनासाधारणेनधाम्नाप्रभावेणतथाऽमृषामृषानासन्किंतुजीवनमापुरेव।अ
न्वमंसततद्राजन्गोविंदानुग्रहेक्षितम् ॥ पीत्वा।विषंपरेतस्यपुनरुत्थानमात्मनइत्युक्तेः । सतांव्रजवासिनामानिरस्तःविषांभःपानात्प्रजा
वियोगजःकुहकःक्लेशोयेनतंपरंसत्यंसर्वत्रसद्रूपतयानुगतंधीमहि ॥ ७८ ॥ १२ ॥ अथकालियनिग्रहानुग्रहलीलामाह ॥ ॥ जन्माद्य
स्य यतोन्वयादितरतश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र

त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ७९ ॥ १३ ॥ ॥ तेजःज्योतिःकर्मभूतंयतःप्राप्तात्आत्तेजोमय
वासुदेवरूपसूर्यात् । ज्योतिषांरविरंशुमानितिश्रीमुखोक्तेः । यस्यवारिणोजन्मासीत्तद्वारियामुनंजलंतरतःप्लवतःकालियस्यार्थेषुधनव
द्रक्ष्यत्वात्फणेषुअभिज्ञःपरःस्वरेणपादतलघातशब्देनाटतिनृत्यतीतिस्वराट्मृदांमर्दनंतथातेनेयथात्रयाणांनृत्यगीतवाद्यानांसर्गोऽमृषा
भगवल्लीलौपयिकत्वात्सत्यःशोभनआसीत् । नृत्यन्पदानुनमयन्दमयांबभूवेत्युक्तेः । तदीयगंधर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्यामृदंग
पणवानकवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुरित्युक्तेश्च । अनुनृत्यलीलातोनंतरंअयादिवरदानादिमंगलंचतेने । किंचयत्रह्रदोरसा
ऽयतेगच्छतीतिह्रदायउरगस्तास्मिंस्तथासूरयोविद्वांसोपिविनिमयोदेवामुह्यंति । तादृशदण्डतादृशानुग्रहकारणानिर्णयादितिभावः । य
त्रचह्रदायेयत्यस्यपरस्यस्वेनधाम्नाविग्रहैकदेशेनाचिह्नतयास्थापितेनचरणेनहेतुनाआसमंतादत्तीत्यादीभक्षकःकस्यकश्यपस्यविःपक्षी
गरुडःकविःआदीचासौकविश्चेत्यादिकविस्तस्मैतंबोधयितुंब्रह्मवेदरूपंसत्यंनाद्यान्मत्पादलांछितामितिवचनंचासीत् । सतांनंदादीनामा
निरस्तंकुहकंदुःखंयेनतंपरंधीमहि । यद्वाह्रदायःसर्पःकालियःयत्रतेजोवारियमुनाजलेविप्रास्तुकोनाविषहेतेत्युक्तेर्मृष्यतइतिमृषोविप्रःस
चात्रसौभरिस्तस्येषद्धाम्नाशापरूपप्रभावेणअविनिमयोवैगरुडस्यनिमयःसंगोविनिमयोनविनिमयोऽविनिमयोगरुडागमनाभावोस्ति ।
कृपयासौभरिःप्राहेत्याद्युक्तेः। अत्रप्रविश्यगरुडइत्याद्युक्तेश्च। तत्रस्वैःपत्न्यपत्याद्यैराजतइतिस्वराट्यतोयस्यजन्माद्यस्यभगवतोऽन्वया
त्पादसंबंधादभिज्ञः । स्मृत्वाचराचरगुरुमित्युक्तेः । मृदांमर्दनंप्राप्तइतिशेषःकेननस्वायस्यसोऽस्वस्तेन।रिपोःसुतानामापितुल्यदृष्टेरित्यु
क्तेः । समवर्त्तिनापरेणआदिकवयेतंप्रसादयितुंब्रह्मस्तुतिंतेनेतंपरंधीमहियथायथावत्अर्थेषुरमणकद्वीपस्थगृहादिषुइत्तरतःविरक्तः । गरुड
भियेतिशेषः । त्रयाणांहस्तपादकर्णानांसर्गस्त्यागोयस्यसत्रिसर्गः । सर्पत्वात् । यत्यत्रपरेसूरयोमुह्यंतितंपरंसदासत्यंनिरस्तानांदे
वानांकुहकंविस्मापकंस्वलीलयेतिभावः ॥ ७९ ॥ १३ ॥ अथदावानलपानलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि-
तरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रि

सर्गो मृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ८० ॥ १४ ॥ ॥ कवयेसुखविस्तारवतियत्रवृन्दावनेमृदांतन्म
य्याभुवोहेतोस्त्रिसर्गस्तत्तद्गुणकृतमात्सर्यादिस्वभावःमृषानास्तीत्यर्थः । अजितावासद्रुतरुट्टतर्षकादिकइत्युक्तेः । यद्वात्रयाणांभूतापस्वे
दोद्गमात्युष्णवातानांसर्गोयत्र स त्रिसर्गोग्रीष्मोयत्रमृषा । ग्रीष्मोनामर्तुरभवन्नातिप्रेयान्शरीरिणाम् ॥ सचवृंदावनगुणैर्वसंतइवलक्षि
तइत्युक्तेः । तत्रवृंदावनइतिशेषः । आद्यस्यस्थावरस्येतरतोजंगमस्यान्वयंवंशमत्तीतिअन्वयात् । विलेलिहानःस्थिरजंगमान्महा
नित्युक्तेः । अवारिवारयितुमशक्यंनवारिजलंयत्रोतिवास्वराट्स्वतएवराजमानम् । यदृच्छयाभूत्क्षयकृद्वनौकसामित्युक्तेः । यत्तेजो
दावानलरूपंजन्मतेनेप्रादुर्बभूव । यतस्तेजसोहेतोः सूरयोनंदाद्याविनिमयःकृष्णाज्ञयालोचनमुद्रयानिर्निमेषाःसंतःयथामुह्यंतिवि
स्मिताःसंति । निमीलयतमाभैष्टलोचनानीत्यभाषतेत्युक्तेः।आत्मानंगाश्वमोचिताः॥ निशाम्यविस्मिताआसन्नित्युक्तेश्च । अर्थेषुश्रीवृं
दावनप्राणिरक्षार्थंब्रह्महृदासर्वज्ञेनपरेण । कर्त्रा । स्वेनधाम्नानिजेनमहिम्नासदानिरस्तकुहकंभक्तानामपास्तदुःखंयथास्यात्तथातत्तेजआ
दिभक्षितंपीतमित्यर्थः । पीत्वामुखेनतान्कृच्छ्राद्योगाधीशोव्यमोचयदित्युक्तेः । यश्चाभिज्ञःसर्वोपायज्ञःतंपरंसत्यंसतांपालकंधीमहि ॥
॥ ८० ॥ १४ ॥ प्रलंबवधलीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय
आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदाऽऽनिरस्तकुहकं सत्यं परं धीमहि
॥ ८१ ॥ १५ ॥ ॥ इतरतोऽन्यस्यपरस्यार्थेषुअसुरमारणादिषुअभिज्ञःअयंकृष्णोसुरसंहारीतिज्ञानवान्यःप्रलंबःजन्मनाद्यस्यज्येष्ठ
स्यबलदेवस्यान्वयात्स्कंधोपरिवहनात्हेतोःस्वराट्स्वयंराजमानोभूत् । अविषह्यंमन्यमानःकृष्णंदानवपुंगवइत्युक्तेः । सआस्थितःपुरटप
रिच्छदोबभावित्युक्तेश्च । ततःसूरःसूर्यइवयातीतिसूरयःऔन्नत्याद्वासूरंयातीतितस्मात्तथायतोयस्मात्प्रलंबात्वारोस्यास्तीतिवारिनवा
रिअवारिअनिवार्यंतेजोभूत् । बलस्येतिशेषः । अथागतस्मृतिरभयइत्याद्युक्तेः । ब्रह्महृत्सर्ववेदतात्पर्यभूतः ॥ ममइममुपदेशमाद्रिय
ध्वंनिगमवनेषुनितांतखेदखिन्नाः ॥ विचिनुतभवनेषुबल्लवीनामुपनिषदर्थउलूखलेनिबद्धइत्यभियुक्तोक्तेः । कृष्णश्चतस्यप्रलंबस्यस्वेना

त्मीयेनधाम्नाबलदेवनाम्नास्वरूपेणहेतुनामृदांमर्दनमातेनेतथाचकार । यास्यंत्यदर्शनमलंबलपार्थभीमव्याजाह्वयेनहारिणानिलयंतदीयामि
त्युक्तेः । यथायत्यांमृदांविनिमयोदेवाआदिकवयेऽघासुरवधइवपश्चादागतायब्रह्मणेतंवत्सकुंमुह्यंतिभीत्याहर्षेणवाविरुद्धवाचोभवंतीतिग्रंथांतर
गम्यम् । यद्वानैतेसुरेशाऋषयोनचैतइत्युक्तेर्विनिमयोगोपाआदिकवयआदिकविंश्रीबलदेवंप्रशंसितुंविस्मिताआसन्नित्यर्थः।दृष्ट्वाप्रलंबंनिह
तंबलेनबलशालिना । गोपाःसुविस्मिताआसन्साधुसाध्वितिवादिनइत्युक्तेः । यत्रप्रलंबेत्रिसर्गःत्रिगुणकृतदेहोमृषाभूत्मुक्तिमापेतिभावः ॥
ततश्चसतांसुहृदांगोपानांनिरस्तंकुहकंप्रलंबहरणजंदुःखंयेनतंपरंसतामाश्रयंसत्यंधीमहि ॥ ८१॥ १९॥वर्षादिवर्णनस्यसर्वतंत्रसाधारणत्वे
नलीलानंतर्गतत्वात्ताद्विहायवस्त्राहरणलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा
य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं
धामहि ॥ ८२ ॥ १६ ॥ यत्रगोपकन्यासुत्रिसर्गस्त्रिविधसृष्टिरमृषाराजकन्यामुनिकन्याश्रुतिकन्याभेदेनत्रैविध्याद्गोपकन्यानां । प्र
सिद्धमेतद्ब्रह्मसंहितायाम् ॥ तेजोवारियामुनजलंतन्मृद्नंतिजलविहारैःक्षोभयंतीतितेजोवारिमृदस्तासांकात्यायनीपूजार्थंवस्त्राणितीरेन्यस्य
यमुनायांस्नातुमवतीर्णानांतासांकन्यानांजन्म । कर्मभूतं।यःपरःअर्थेष्वातेनेसार्थीचक्रइत्यर्थः।अभिज्ञःसंकल्पोविदितःसाध्व्योभवतीनामि
त्युक्तेस्तद्वृत्तांतवित् । यद्वाऽभितोज्ञाःस्वरहस्यवेदिनःप्रियसुहृदोयस्यसोभिज्ञःइतरतोनदीकूलात्स्वैर्धनैर्वस्त्रैराजतइतिस्वैर्निजैर्गोपैर्वारा
जतइति । वयस्यैरावृतस्तत्रगतस्तत्कर्मसिद्धयइत्युक्तेः । ब्रह्मपरमसुखरूपोपियतोयः । प्रथमार्थेत्रतसिः । आद्यस्यस्थावरजन्मनःकदंब
स्यान्वयंसंबंधमतातियातीत्यन्वयात् । अभूदितिशेषः । तथासत्यंतेने । याताबलाव्रजंसिद्धामयेमारंस्यथक्षपाइत्युक्तेः । यथास्वेनधाम्नादे
हेनविनिमयोविशेषसंगःप्रेम्णापरस्परशरीरविपर्यासोवाभवतिआदिकवयेसर्ववेदप्रवर्त्तकाययत्यस्मैसूरयोयाज्ञिकाद्द्विजामुह्यंतितत्वेननजा
नंतियद्वावर्षशरदृत्वोरपिश्रीकृष्णशक्तिप्रभावेणसर्वानंदजनकत्वात्तद्वर्णनमपिन्याय्यमितिमत्वाह । यत्रवर्षतौशरदिचत्रयाणांनीलांबुद
तडित्स्तनितानांमृद्वायुव्यभ्रत्वांभःस्वाच्छ्यानांचक्रमात्सर्गःस्वभावोऽमृषा।सांद्रनीलांबुदैर्व्योमसविद्युत्स्तनयित्नुभिरित्युक्तेः। शरत्समभ

वद्यभ्रास्वच्छांब्वपरुषानिलेत्युक्तेश्च। तद्दतुद्धर्थयः परःशेषाख्यंधममामकमित्युक्तेः । स्वेनधाम्नासंकर्षणेनसहान्वयात्तिसेषेवेतंपरंसदासत्यंधी
महीतियोज्यं । यतोयस्यपरस्याद्यस्यब्रह्मणइतरतोभूम्यादीनांचोंथषुप्रार्थनयाऽऽयेव्रजेजन्मयद्यत्रसूरयःसुवोनेकविधसत्वतृणाद्युत्पत्तेः
रयःतेजोवारिमृदांविनिमयोवर्षत्वेपेक्षयावैपरीत्यंतेजसासूर्येंद्वादीनामभ्रराहित्येनवारिणोनैर्मल्येनमृदांपंकाभावेनेतिविवेकः । व्योम्नोद्वंसुवः
पकमपांमलं।शरज्जहारेत्युक्तेः । यद्वास्वराडिंद्रःसूर्यश्चवारिजलंतेजश्चतेने । अष्टौमासान्निपीतमित्याद्युक्तेः। शदरकांशुजांस्तापानित्याद्यु
क्तेश्च । यद्वातेजःसूर्यःमृद्यंतेकरिभिरितिमृंदितेषांकमलानां। नालंबनंयूथपतिरिवेत्युक्तेः।ब्रह्माधिक्यंतेने । उदहृष्यन्वारिजानीत्युक्तेः।यद्वा
मृदांधान्यानांब्रह्मतेने । बभौभूःपक्वसस्याढ्येत्युक्तेः । आदीनांजीवानांकवयेसुखविस्तारार्थंयश्चपरोऽभिज्ञःकिंभूतंपरंनिरस्तंकोभूमेः
हृकंदुःखंयेन । किलाभ्यांनितरांहरेरित्युक्तेःतामित्यर्थः। मर्त्यात्मानोनमेनिरइत्युक्तेः।यद्वयंगुरवोनॄणांस्वार्थेमुह्यामहेद्विजाइत्युक्तेश्च। जातो
यदुष्वशृण्मह्यपिमूढानविह्महे । यन्मायामोहितधियोभ्रमामःकर्मवर्त्मस्वित्युक्तेश्च । तंसतांविप्राणामानिरस्तंकुहकंमानसदुःखंयेनतम् ।
वयंधन्यतमालोकइत्याद्युक्तेः । परंसत्यंहृदाधीमहि ॥ ८२ ॥ १६ ॥ यज्ञपत्नीप्रसादलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्व
यादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ऽब्रह्म हृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽविनिमयो यत्र
त्रिसर्गो मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ८३॥ १७॥ ॥ यस्यान्वयस्यवंशस्याताविराड्रूपाद्विष्णोर्हेतोरा
दिप्रथमंजन्मप्रादुर्भावोभूत् । मुखतोऽवर्ततब्रह्मेत्यारभ्ययत्सून्मखत्वाद्वर्णानांमुख्योभूद्ब्राह्मणोगुरुरित्युक्तेः । अर्थेष्वर्थवादेष्वेवाभिज्ञः ।
आहुर्धूम्रधियोवेदंसकर्मकमताद्विदइत्युक्तेः । अर्थवादस्तुप्राशस्त्यनिंदान्यतरपरंवाक्यम् । सद्विधाविधिशेषोनिषेधशेषश्च । तत्रवा
यव्यंश्वेतमालभेतभूतिकामइतिविधिशेषस्यवायुर्वैक्षेपिष्ठादेवतेत्यादेर्विधेयार्थप्राशस्त्यबोधकतयार्थवत्त्वम् । बर्हिषिरजतंनदेयमित्यादि
निषेधशेषस्यसोरोदीद्यदरोदत्तद्रुद्रस्यरुद्रत्वमित्यादेर्निषेध्यनिंदितत्वबोधकतयाऽर्थवत्त्वमित्यत्रबहुवक्तव्यमस्त्यतःप्रकृतमनुसरामः ।
यतःयोन्वयःहृतचित्तंअब्रह्मपरविमुखमातेने । स्वलोकंनविदंतितइत्याद्युक्तेः । अतश्चस्वर्गमाटतिभोग्यतयागच्छतीतिस्वराट्स्वर्ग

मनाशाकलुषितमतएवइतरतःसंसारमेघातेनेतस्मादन्वयात्आसनात्प्रेक्षतइतिवत्तंवंशमाश्रित्ययेसूरयःपण्डिताब्राह्मणाःकवयेसर्वज्ञाय यत्यस्मैयंपरंविज्ञातुंमुह्यंतितेषामविनिमयोयथाविध्यनुष्ठितःत्रिसर्गःधिग्जन्मनस्त्रिवृदित्युक्तेः । शौक्लसावित्रयाज्ञिकरूपंजन्मत्रयंतेजः ब्रह्मवर्चसंचनिरस्तकुहकंनिष्कपटंयथातथास्वेनःस्वपातिर्नभवतीत्यस्वेनःउपपतिरूपःपरस्तंसीदतिभजतीतिअस्वेनस त्तेनपरानिष्ठेनवार यंतिबहिर्यातीरितिवारिणोवारकाःपतिपुत्राद्यास्तान्मृद्नन्तिपरित्यज्यगच्छंतीतिवारिमृदः । गृह्णंतिनोनपतयःपितरःसुतावेत्याद्युक्तेः । प्रातविसृज्यवसतीरित्याद्युक्तेश्च । तासांयाज्ञिकपत्नीनांधाम्नाप्रभावेणयथातत्वतोमृषामिथ्यास्यात्तंसत्यंसत्पालकंपरंधीमहि ॥ ८३ ॥ ॥ १७ ॥ गोवर्धनधारणलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आ दिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽऽवि निमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ८४ ॥ १८ ॥ ॥ स्वःस्वर्गमाटतीतिस्वराडिंद्रः । आङ्पूर्वादटेःक्विप् । अर्थेषुस्वयज्ञार्थवसुषुइतरतइतर स्मैगोवर्द्धनायसत्स्वितिशेषः । अमृषायज्ञभंगक्रोधेनज्ञस्तद्वृत्तांतवित्अभिनिर्भयंतत्रान्वयात्मेघानांपश्चादाययौयतोयस्मिन्व्रजेआद्य स्यपरस्यजन्मासीत् । किंचस्वेनात्मीयेनतेजश्चआपश्चआरीवायुश्चमृद्नातिक्षोभयतिचक्षुरादीनीतिमृद्धूमश्चतेजोवारिमृदस्तेषांधूम ज्योतिःसलिलमरुतांसंबंधिनाधाम्नामेघेननिरस्तकुआवीतभूमण्डलंयथातथाहस्फुटंतत्कंजलंतेनेमेघैर्जलमुत्सर्जयामासेत्यर्थः । यत्रके जलेसतिब्रह्मणिश्रीकृष्णेहृत्प्रीतिर्यस्यसब्रह्महृत्तेनबलरामेणत्रिषुनंदग्रामबृहत्सानुगोवर्द्धनप्रांतग्रामसमूहेषुयद्वागोवर्द्धनवृंदावनयमुनापुलि नेषुस्थितःसर्गस्त्रिसर्गःव्रजजनःआविपालितः । अवरक्षणेकर्मणिलुङ् । शेषरूपेणकुंडलीभूयांबुप्रवेशंरोधयामासेतिसंहितायां । किंभूतः सर्गःनिश्चितोमयोनाशोयस्यसनिमयःअत्तीत्यादी । बलिमादद्भृहद्धपुरित्युक्तेः । सचासौकविश्चेतितथातस्मैकंसुखंवातिप्रापयतीतिकविः । चास्मैनमस्यामः शर्मणेचात्मनोगवामित्युक्तेः । यत्यस्मैयंद्रष्टुंसूरयोव्रजजनामुह्यंतिविस्मयंते । अहोपश्यतशैलोसौरूपीनोनुग्रहंव्यधा दित्युक्तेः । सत्यंसत्यप्रतिज्ञं । गोपायेस्वात्मयोगेनसोयंमेव्रतआहितइत्युक्तेः । तंपरंसदाधीमहि ॥ ८४ ॥ १८ ॥ गोविंदाभिषेकलीला

माह ॥ ॥ जन्माद्यस्य यतो ऽन्व ऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरऽयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ८९ ॥ १९ ॥ ॥ जन्मनिज
न्मकालआद्यमत्तुंयोग्यंजन्माद्यंव्यवहारप्राशस्त्याद्गोक्षीरंतस्ययतोयस्याःसुरभ्याःसूर्जन्मासीत् सासुराभिःअनुपश्चात्तज्ज्ञःपरमतवित्भगव
ताममदण्डार्थमेवैतत्कृतमितिज्ञानवानित्यर्थः।यःस्वराडिंद्रःसचइतरतोगोलोकात्अर्थेषुदोषक्षमापनश्रीगोविंदाभिषेकाद्यर्थंअंतिनिकटेऽ
यात्ययौ । गोलोकादाव्रजत्कृष्णंसुरभिःशक्रएवचेत्युक्तेः। ततःआदेःपरस्यकवयेस्तुतिकर्त्रेइन्द्रायब्रह्महृत्वेदतात्पर्यरूपःपरःअमुह्निमोहा
भावेपरतत्वज्ञानेसतीत्यर्थः । विशुद्धसत्वंतवधामशांतामित्युक्तेः । अभिभियोऽभावंचातेने । गम्यतांशक्रभद्रंवइत्युक्तेरनुजग्राहेत्यर्थः। यत्
यस्मादिंद्रात्अयःश्रीगोविंदाभिषेकादिशुभावहविधिरासीत् । इन्द्रःसुरर्षिभिःसाकंनोदितोदेवमातृभिः ॥ अभ्यषिंचतदाशार्हंगोविंदइति
चाभ्यधादित्युक्तेः । यत्रायेसतितेजांसिस्वर्णरत्नादीनिवारीणितन्मयानिसारित्स्त्रोतांसिमृद्पृथिवीतासांविनिमयःस्वरूपवैपरीत्यंपूर्वापेक्ष
याधिक्यंयथासीत् । तत्र गिरयोबिभ्रदुन्मणीनितितेजसांनानारसौघाःसरितइतिवारीणांवृक्षाआसन्मधुस्त्रवाइतिअकृष्टपच्यौषधयइत्या
द्युक्तेः पृथिव्याश्चाधिक्यंबोध्यं । तथात्रिसर्गःत्रिगुणकृतःशांतहिंस्रघोरत्वादिस्वभावःमृषामिथ्यासीत् । निर्वैराण्यभवंस्तत्रक्रूराण्यपिनि
सर्गतः ॥ कृष्णेभिषिक्तेएतानिसत्वानीत्युक्तेः। स्वेनधाम्नैश्वर्येणनिरस्तकुहकःएषांश्रियावलिप्तानांकृष्णेनाध्मायितात्मनाम् । धुनुतश्रीम
दस्तंभंपशून्नयतसंक्षयमित्युक्तिबोध्यइन्द्रमदोयेनतं । महेंद्रमदभित्पायान्नइन्द्रोगवामित्युक्तेः । सत्यंसन्मार्गप्रवर्तकंपरंसदाधीमहि ॥
॥ ८९ ॥ १९ ॥ वरुणालयनन्दानयनलीलांगोपेभ्योवैकुण्ठदर्शनलीलांचाह ॥ जन्मा ऽऽद्यऽस्य यतो ऽन्वयादि तरतश्चाऽर्थे
ष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वे
न सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ ८६ ॥ २० ॥ ॥ यतोनंदाज्जन्मआदिप्रथमंअस्यकृष्णस्यापिस्नानात्पूर्वमेवतेजोवारियामु
नंजलंतरतःप्लवतामज्जतस्तस्यनंदस्यअन्वयादिवरुणलोकगमनादिचासीत् । अर्थेषुवरुणानुग्रहादिष्वभिज्ञःस्वराट्स्वतःसिद्धपरमैश्वर्यः

यःपरःयद्वावरुणलोकात्पितरमानीयस्वैःसहराजमानःकवये।अपिनःस्वगतिंसूक्ष्मामित्याद्युक्तेः। परगुणवर्णनकर्त्रेव्रजजनाय । जनोवैलो
कएतस्मिन्नविद्याकामकर्मभिः॥ उच्चावचासुगतिषुनवेदस्वांगतिंभ्रमन्नित्याद्युक्तेः । तंदर्शयितुंस्वेननिजेनधाम्नातेजसोपलक्षितंमृदांमृत्प्र
धानस्यब्रह्मांडस्यादिकारणंसत्यंनित्यंब्रह्मतद्रूपंलोकमित्यर्थःतथाहृदाइच्छयाएवतेने ।दर्शयामासलोकंस्वंगोपानांतमसःपरम्॥सत्यंज्ञान
मनंतंयद्ब्रह्मज्योतिःसनातनमित्युक्तेः । यत्रब्रह्मरूपेलोकेसूरयोनन्दाद्यायथामुह्यंति अहोअस्यवैभवमितिविस्मयंतेयद्वात्रकालिंद्याद्य
भावाद्वयंकिंकुर्मइत्येवंमोहमापुः । तदुक्तंकालिंदीनतथैवनास्तिपुलिनंगोवर्द्धनोनोगिरिर्वेणुर्नास्तिनचास्तिगोपसुखदोवंशीवटाख्योव
टः ॥ अस्मिन्नास्तिचकृष्णकेलिविपिनंनोवागवांचारणांकिंकुर्मोमधुसूदनस्यनगरेसर्वेपितूष्णींस्थिताः॥इति। यत्रचलोकेतिसृणांल्हादि
नीसंधिनीसंविदांशक्तीनांसर्गःसृष्टिरमृषासत्यःनिरस्तकुअलौकिकंकंसुखंचास्ति । परमानंदनिर्वृताइत्याद्युक्तेः। योलोकोऽविनिमयोऽप
रिणामीतंपरंहस्फुटंसदाधीमहि ॥ ८६ ॥ २० ॥ रासेगोपीमिलनादिलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽ
र्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा ऽविनिमयो यत्रत्रिसर्गो ऽमृषा धाम्ना
ऽस्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ ८७ ॥ २१ ॥ ॥ यततइतियत्ताप्राच्यादिदिक्प्रसादेनसर्वशोकनाशादौयतनशीलः।
यतीप्रयत्नेधातोस्तृप्रत्ययः। एवंचसतियत्रत्रिसर्गइत्यत्रत्रकारेतद्वयंबोध्यं। तेजःशोणोधावतीत्यादिवत्तेजोमयइत्यर्थः। धाम्नामंडलेन
अविनिमयःव्यतिक्रमवर्जितःपूर्णइत्यर्थः । अत्रेरत्रिनाम्नोमहर्षेःसर्गःपुत्रोऽत्रिसर्गःयत्ताचासावत्रिसर्गःयत्रत्रिसर्गःएतावताचंद्रोलब्धःजन्म
प्रादुर्भावमयातप्राप । अनुतदनन्तरंआद्यस्यरसेषुप्रथमस्यशृंगारस्यार्थेषुआद्यरसंसार्थीकर्त्तुमित्यर्थःअभिज्ञःतत्सामग्रीनिर्वाहचतुरःयतः
सावधानःयःपरःस्वरेणवंशीध्वनिनाऽटतीतिस्वराट्सः। वंशीनादंभ्रमन्नासीत् ॥ जगौकलमित्याद्युक्तेः। अटनंतुवनशोभादर्शनार्थंतेनवार
यंतीतस्ततोयातीरितिवारिणोवारकाःपतिपुत्राद्याः । ग्रहादेर्णिनिः । वारिणोमृदंत्युल्लंघयंतीतिवारिमृदस्तासां ।तावार्यमाणाःपतिभिः
पितृभिर्भ्रातृबंधुभिः॥ नन्यवर्तंतमोहिताइत्याद्युक्तेः । गोपीनांहृत्तहरणंइतरतोव्रजात्तथाऽऽतेनेऽकारि। किंचअमृषाक्रोधेनहेतुभूतेनसू

रयः पण्डितामैवंविभोर्हतिभवान्गदितुंनृशंसमित्यादिरहस्यवक्तृत्वात्।कविसूर्यादयःशब्दाःक्वचितस्त्रियामपिप्रयुज्यंतेविवक्षावशात् । यथा
गोविंदार्णवेक्षणंप्रतिद्विजस्यनार्यःसर्वाःसूरयोवृत्तपूर्वाइत्युक्तेस्तथाकन्यास्ताःकवयःप्रभोइत्युक्तेश्चयत्त्यागोप्यःआदौदर्शनसमयएवकवि
रादिकविस्तस्मैस्वागतंवोमहाभागाइत्यादिवर्णयतेपरस्मैयथामुह्यंतिपरस्यवचःश्रुत्वायथामोहिताःस्युरित्यर्थः । वाचःपेशैर्विमोहयन्नि
त्याद्युक्तेः । स्वेनाःपतयस्तान्नसीदन्तिप्राप्नुवंतीत्यस्वेनसदस्तासांव्रजस्त्रीणां । पतिसुतादिभिरार्त्तिदैःकिमित्युक्तेः । नान्यसमक्षमंगस्था
तुंत्वयाभिरमिताबतपारयामइत्याद्युक्तेश्च । आनिरस्तंकुहकंस्वनैराश्यप्रकाशकवचनजनितंदुःखंयेनतं । बाहुप्रसारपरिरम्भकरालकोरु
नीवीस्तनालभननर्मनखाग्रपातैरित्युक्तेः । ससत्यकामइत्यादेरासलीलारंभेसत्यसंकल्पवत्त्वात् । सत्यंब्रह्मतद्रूपंतंपरंधीमहि ॥ ८७ ॥
॥ २१ ॥ अथांतर्द्धानपुनराविर्भावलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चा ऽर्थेष्व ऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय
आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां ऽऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि
॥ ८८ ॥ २२ ॥ ॥ स्वराट्स्वच्छंदःअभिज्ञः गोपीनांसौभाग्यमानादीनांयःपरःअर्थेषु अर्थशब्दस्यनिवृत्त्यर्थत्वात् तादृशमानशां
त्यर्थंप्रशमायप्रसादायेत्याद्युक्तेः।अदृश्यप्रयोजननिमित्तंवाइतरतइतरयाकयाचिद्वल्लव्यासहयतःयाभ्योगोपीभ्यो ऽयात्तययौअंतर्दधावित्य
र्थः । अनुततःसूरयःप्रेमभक्तिपण्डिताअपितायथाआदिकवयेपरस्मैतंलब्धुंमुह्यंतिव्याकुलीभवंति । यांगोपीमनयत्कृष्णइत्याद्युक्तेः । य
त्तेसुजातचरणांबुरुहंस्तनेषुभीताःशनैःप्रियदधीमहिकर्कशेषु ॥ तेनाटवीमटसितद्व्यथतेनकिंस्वित्कूर्पादिभिर्भ्रमतिधीर्भवदायुषांनइत्युक्ते
श्चोभयत्रमानत्वात् । आद्यस्यदुर्ज्ञेयत्वादितिशेषः । रूपंयत्तत्प्राहुरव्यक्तमाद्यमित्यादावाद्यपदवाच्यस्यदुर्ज्ञेयतोक्तेःयत्ब्रह्महृत्परःतथा
तासुगोपीषुजन्मप्रादुर्भावमातेने । तासामाविरभूच्छौरिरित्याद्युक्तेः । यत्रयासुगोपीषुस्वेनात्मीयेनधाम्नापरस्यशरीरेण । कर्त्रा । मृदामर्द
नेनगोपीद्वयद्वयमध्यप्रवेशसंघर्षेण।तासांमध्येद्वयोर्द्वयोः॥प्रविष्टेनेत्याद्युक्तेः । यथातेजोऽवारिस्वीकृतं । व्यरोचताधिकंतातेत्युक्तेः । तथा
विनिमयोव्यत्ययःपरस्परमेलनंचाभूदित्यर्थः । गृहीतानांकंठेस्वानिकटांस्त्रियः ॥ यंमन्येरन्नित्युक्तेः । त्रिसर्गःनृत्यगीतवाद्यसृष्टिश्चअमृषा

सत्याभूत् । रासलीलोपयोगित्वात् । वलयानांनूपुराणांकिंकिणीनांचयोषितामित्याद्युक्तेः । वलयनूपुरघोषवाद्यैरित्युक्तेश्च । निर
स्तकुअलौकिकंहस्फुटंकंसुखंचासीत् । दिवौकसांसदाराणामौत्सुक्यापहृतात्मनामित्याद्युक्तेः । कृष्णाभिमर्शमुदिताइत्याद्युक्तेः । नायं
श्रियोंगउनितांतरतेःप्रसादःस्वर्योषितांनलिनगंधरुचांकुतोन्याः ॥ रासोत्सवेस्यभुजदण्डगृहीतकण्ठलब्धाशिषांयउदगाद्व्रजवल्लवीना
मित्युक्तेः । यावैश्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपियदात्मनिरासगोष्ठयाम् ॥ कृष्णस्यतद्भगवतश्चरणारविंदंन्यस्तंस्तनेषुविज
हुःपरिरभ्यतापमित्युक्तेश्च । अनिच्छंत्योययुर्गोप्यःस्वगृहान्भगवत्प्रियाइत्युक्तेश्च । तंपरंसत्यंसतीप्राप्यंसदाधीमहिआस्मृतौ ॥ ८८॥
॥ २२ ॥ रासनृत्यजलावगाहलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्व ऽयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म
हृदा य आदि कवये मुह्यंति यत्सूरऽयः ॥ तेजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं
सत्यं परं धीमहि ॥ ८९ ॥ २३ ॥ ॥ यतोयाभ्यःबल्लवीभ्यःआद्यस्यनृत्यस्यजन्माविर्भावआसीत्अनुताभिरितिशेषः । इतरतो
गीतानामर्थेषुअभिनीयाभिनयेषुअभिज्ञःयःपरःस्वरेणताधिगित्यादिस्वरेणाटतीतिस्वराट्तेनेकल्पितः । तासांगीतान्यभिनयन्स्वयंन
नर्त्तेत्यर्थः । विनिमयःवैपरीत्यश्चाभूत् । परस्मिन्गायतिबल्लव्योभिनयंत्योननृतुरित्यर्थः । त्रिसर्गोनृत्यगीतवाद्यसृष्टिरमृषासार्थोभूदित्य
र्थः । कवयेसुखविस्तारकेयत्रयस्मिन्परस्मिन्विषयेअयःकंदर्पाअपि । ह्रस्वेकारस्यकामवाचित्वात्जसिअयइतिरूपंसिध्यति । सा
क्षान्मन्मथमन्मथइत्याद्युक्तेर्यथामुह्यंति । कंदर्पकोटिलावण्यइत्युक्तेर्बहुत्वंनविरुद्धं । तथाआदिकारणंब्रह्मयत्यःपरःतत्रवारिअयात् ।
तेजस्तेजोमयःसूर्यःयस्यवारिणः सूतइतिसूःपिताउत्पत्तिकारणमित्यर्थः । यथैवसूर्यात्प्रभवंतिवारइत्युक्तेः । आदित्याज्जायतेवृष्टि
रितिस्मृतेश्चसामान्यतोवार्युत्पादकत्वेपिविशेषतोयमुनोत्पादकत्वंतुनिर्मितेभवतेपित्रावसामियमुनाजलेइत्यर्जुनंप्रतियमुनोक्तेर्यमोयमी
श्राद्धदेवःसंज्ञायांरवितोभवन्नित्युक्तंषष्ठेपीतिआविशद्वाःश्रांतोगजीभिरिभराडिवेत्युक्तेः । मृदांभुवःस्वेनधनभूतेनधाम्नाश्रीवृंदावनेनसहा
र्थाज्जलक्रीडानन्तरंवनक्रीडांचकारेत्यर्थः । ततश्चकृष्णोपवनेजलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचारेत्युक्तेः । सदानित्यंनिरस्तं

व्रजस्थानांकुहकंदुःखंयेनतंहृदामनसासत्यंसद्धर्मप्रवर्त्तकंपरंधीमहि ॥ ८९ ॥ २३ ॥ सुदर्शनमोचनंशंखचूडवधलीलांचाह ॥ ॥ जन्माऽऽद्यऽस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वाऽऽरि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्नाऽस्वे न सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ९०॥ २४॥ ॥ यतःपितुर्नंदाज्जन्मअर्थेष्वं बिकापूजनार्थंइतरतःतद्वनंप्रतियतोगतस्यास्यपितुर्नंदस्यआदीभक्षकःहृदायउरगःपूर्वंसुदर्शनः यस्यान्वयात्पादस्पर्शरूपसंबंधात्अभि ज्ञःपूर्वजन्मस्मरोभूत्।अहंविद्याधरःकश्चित्सुदर्शनइतिश्रुतःइत्युक्तेः । किंचयद्येनसगंधर्वःस्वःस्वर्गमासमंतादटतीतिस्वराट्तेनेकृतः।आदेः परस्यकवयेस्तुतिकर्त्रेगंधर्वरूपिणेयद्यस्मैसुदर्शनायसूरयःसर्वेव्रजवासिनोमुह्यंतिआश्चर्याद्विवशाभवंतीति ।निशाम्यकृष्णस्यतदात्मवैभवं व्रजौकसोविस्मितचेतसस्ततइत्युक्तेः।अविनिप्रकरणाद्बल्लवीनांरक्षकेयत्रपरस्मिन्स्थितेनधाम्नामहिम्नामयोयथामयइवमायावीत्रिभिःकृष्ण बलगोपीभिःसर्गःसंगोयस्यसतथातेजसामणिज्योतिषाऽवतिरक्षत्यात्मानामितितेजोवाः।अवतेःक्विप्।अमृषाऽमर्षणेनोपलक्षितःस्वेनोधनप तिःकुबेरस्तंसीदतिसेवतइतिस्वेनसद्शंखचूडः । धनदानुचरोभ्यगादित्युक्तेः । आनिरस्तंमुष्टिघातेनहृतंअतएवकुंभूमिंहंतिगच्छतीति कुहंभूमौपतितंकंशिरोयस्मिंस्तदानिरस्तकुहकंयथातथामृदांमर्दनमारिप्रापितः । निहत्यमुष्टिनैवांगेत्युक्तेः । तेजोवारिहसंधिरार्षः । तंप रंसत्यंब्रह्मश्रीकृष्णंधीमहि । यच्छब्दोत्रतृतीयाचतुर्थीपंचमीषष्ठीरूपेणपारिणतः स्थानचतुष्केसंबध्यते ॥ अथवेणुवादनलीला ॥ वयंतंप रंहृदाधीमहियःस्वरेणवेणुनादेनाटतिगच्छतीतिस्वराट् । स्वरान्भैरवमालकौशिकादीनटतिगायतीतिवा । दत्तवेणुरनयत्स्वरजाती रित्युक्तेः ।ब्रह्मब्रह्मानंदसुखजनकंवेणुनादंतेनेयतोवेणुनादस्यान्वयाच्छ्रवणसंबंधाज्जन्मनाद्यस्यमुख्यस्यस्थावरस्येतरतोजंगमस्ययथाय थावत्विनिमयोवैपरीत्यंनिजधर्मपरावृत्तिरितियावत्।अस्यंदनंगतिमतांपुलकस्तरूणामित्युक्तेः।किंभूतोर्थेषुवेणुवादनभेदेष्वभिज्ञःवेणुवाद्य उरुधानिजशिक्षाइत्युक्तेः । आआकारआदिर्यस्यसआत्मातस्यकवयेसुखविस्तारार्थेआत्मातुराधिकातस्येत्युक्तेराधाविनोदार्थमितिलब्धं

१ सप्तमोमुख्यसर्गश्चषड्विधस्तस्थुषांचयइत्युक्तेः ।

॥ यद्यस्मिन्वेणुनादेसूरयोब्रह्माद्यामुह्यंति । शक्रशर्वपरमेष्ठिपुरोगाःकश्मलंययुरनिश्चिततत्त्वाइत्याद्युक्तेः । आंस्फुटंतेजोवारिपयस्त
न्मृद्भातिमथ्नातीतितथागोपीसमूहश्चमुह्यंति । कश्मलेनकबरंवसनंवेत्याद्युक्तेः।यत्रवेणुनादेत्रयाणांमंद्रतारमध्यानांध्वनीनांसर्गोऽमृषास्वे
नसदाभक्तप्रभुतिष्ठताधाम्नाऽसाधारणप्रभावेणनिरस्तानाममराणामपिकुहकंविस्मापकंकृष्णेतरगोपकर्तृकवेणुवादनेदेवानांविस्मयोनभव
तितत्रतद्धामाभावात्।निजशिक्षाइत्युक्तेः।सत्यंसत्यरूपब्रह्मसुखाभिव्यंजकत्वात्।वेब्रह्मसुखमित्युक्तंणुःकामसुखमुच्यते।ताउभेयत्रसततंसच
वेणुरिहोच्यतइतिइहप्रमाणवाक्यानिस्वतउन्नेयानि ॥ ९० ॥ २४ ॥ अरिष्टकेशिव्योमवधलीलामाह ॥ ॥ जन्माऽऽद्यऽस्य
यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेऽजोऽवारि मृदां यथा
ऽविनि मयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ९१ ॥ २९ ॥ ॥ अभिज्ञःसर्वज्ञस्यपरस्ययत्र
यस्मिन्व्रजेजन्मासीत्तत्रआदिकवयेआदिकविंपरंहंतुंस्वराट् । रंभमाणःखरतरामित्युक्तेः । स्वरेणाटन्ब्रह्मपरंशृंगप्रहारादिनाहरत्यप
नयतीतिब्रह्महृतयः अरिष्टःइतरतोमथुरातःआइत्याश्चर्येअंतिसमीपेऽर्थात्कृष्णसमीपेऽयात्आगतः । यद्वाइतरतःस्वाभाविकंरूपं
विहायवृषभःसन्नित्यर्थोविधेयः । अथतर्ह्यागतोगोष्ठमरिष्टोवृषभासुरइत्युक्तेः । अनुतदनुअर्थेषु । केशीतुकंसप्रहितःखुरैर्महीमित्युक्तेः ।
कंसहितमुद्दिश्यव्रजनाशार्थंरयः । महाहयोनिर्जरयन्मनोजवइत्युक्तेर्वेगवान्अस्यपरस्यआदीभक्षकःएनंभुजद्वारागिलन्नित्यर्थः । यः
केशीअयात्कसति । ताबल्लवाःसमाख्यातास्ताश्चौरास्तामहाभटाइत्येकाक्षरीनाममालोक्तेस्तानांबल्लवानामिनेप्रभौश्रीकृष्णेऽविनिव्र
जरक्षकेऽमुहिनिर्भयेसति । बलदर्पहाहंदुष्टानांत्वादृशानांदुरात्मनामित्युक्तेः । सख्युरंसेभुजाभोगंप्रसार्यावस्थितइत्युक्तेर्नहिसमयस्ये
त्थमवस्थानमेतादृश्युक्तिश्चसंजाघटीति । किंचमयनामासुरविश्वकर्मायत्सूर्थत्पितासचव्योमोगोपरूप्यसुरोऽयात् । मयपुत्रोमहामा
योव्योमोगोपालरूपधृगित्युक्तेः । किंभूतःयतोयत्नवान्गोपहरणेस्वविमोचनेचगोपान्नयंतंजग्राहेत्युक्तेः । इच्छन्विमोक्तुमात्मानंनाशक्नो
दित्युक्तेश्च । तेसर्वेयथायथावत्स्वेनात्मायेनमृदांधाम्नापार्थिवशरीरेणमृषामिथ्यैवस्युःकिंतुतैःत्रिसर्गस्त्रिलोकक्षत्अजःसर्वदाजनिरहितः ।

नजातोनजनिष्येहंनजायेहंकदाचन ॥ अतोमामजइत्येवंप्राहुःसर्वेमुनीश्वराइत्युक्तेः । अवारिप्राप्तःमुक्ताःस्युरित्यर्थः । येचप्रलंबखरदर्दुर
केश्यरिष्टमल्लेभकंसयवनाइत्याद्युक्तेः ।शरीराणांपांचभौतिकत्वेपितद्वैशेष्यात्तद्वादस्तद्वादइतिन्यायात्पार्थिवभागाधिक्येनपार्थिवोक्तिः ।
सतांव्रजवासिनामानिरस्तंकुहकंदुःखंयेनतंपरंवासुदेवंधीमहि ॥ ९१ ॥ २६ ॥ अथाक्रूरागमनमाह ॥ ॥ जन्माऽऽद्यस्य यतोऽन्वयादि
तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो
ऽमृषा धाम्ना स्वेनसदा ऽऽनिरस्तकुहकं सत्यं परं धीमहि ॥ ९२ ॥ २६ ॥ ॥ यत्रव्रजेआद्यस्यजन्मासीत्तत्रेतरतोमथुरातोऽर्थेषुकृ
ष्णानयनाद्यर्थेषुसत्सुयतोगच्छतोऽक्रूरस्याभिज्ञःअभिप्रायज्ञःनामैकदेशन्यायेनाभिशब्दोऽभिप्रायेवर्त्तते।मांवक्ष्यतेऽक्रूरततेत्युरुश्रवाः।किं
चशिरस्यधास्यन्निजहस्तपंकजमित्यादितच्चिंतितज्ञःअमृषासत्यंतच्चिंतितमितिशेषः । तेने।तदभिप्रेत्यभगवान्रथांगांकितपाणिना । प
रिरेभइत्याद्युक्तेःयोऽक्रूरोमृदांकृष्णपादांकितभूरजसांमध्येऽन्वयात । पुनःपुनर्लुलोठेत्यर्थः । यःकृष्णपादांकितमार्गपांसुष्वचेष्टतेत्युक्तेः ।
यत्सूर्यस्यपिताश्वफल्कःअयःलोकशुभावहः। देवेऽवर्षतिकाशीशःश्वफल्कायागतायवै॥स्वसुतांगांदिनींप्रादात्ततोवर्षत्स्मकाशिष्वित्युक्तेः।
यश्चतेजोवारिसूर्यजाजलेआदिकवयेआदिकविंपरंप्रसादयितुंब्रह्मशब्दोपलक्षितांस्तुतिंहृदाचेतसातेनेचकार । नतोस्म्यहंत्वाखिलहेतुहेतु
मित्याद्युक्तेः।देहलीदीपकन्यायेनक्रियासम्बन्धोत्रबोध्यः । विनिमयोनिमेषरहितागोप्यःयस्मिन्नागतेमुह्यंतिलेख्यानीवोपतस्थिरइत्युक्तेः।
हृदिस्पृशाश्चित्रपदागिरःसंमुमुहुःस्त्रियइत्युक्तेः । यद्वाविवशाअभवन्नित्यर्थः । निवारयामःसमुपेत्यमाधवमित्याद्युक्तेः । किंभूतोऽक्रूरःस्वा
नांयदूनामिनंश्रीकृष्णंसीदतिसेवतेइतिस्वेनसद्पुनःत्रयाणांतापानांसर्गोनिर्मुक्तिर्येनसात्रिसर्गः । अक्रूरेप्रोषितेऽरिष्टान्यासन्वैद्वारकौकसा
म् ॥ शारीरामानसास्तापामुहुर्दैविकभौतिकाइत्युक्तेः । पुनःस्वेनस्यमंतकरूपेणमणिद्रव्येणराजतइतिस्वराट्धाम्नानिजरूपप्रकाशेनय
थायथावत्आनिरस्तमपास्तमक्रूरांतर्गतमहोमयानीतंकृष्णंकंसोमारयिष्यतीत्येवंरूपंदुःखंयेनतंपरंसत्यंसर्वप्रपञ्चाधिष्ठानंधीमहि ॥९२॥
॥ २६ ॥ अथरजकवधमालाकारशौचिककुब्जानुग्रहधनुर्भंगहस्तिपकुवलयापीडवधलीलामाह ॥ ॥ जन्माद्य ऽस्य यतो ऽन्व ऽया

दितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रि
सर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ९३ ॥ २७ ॥ ॥ अनुमथुरागमनानन्तरंस्वैर्धनभूतैर्वस्त्रैर्निजानुगैर्वारा
जतइतिस्वराड्यतः । ल्यब्लोपेपंचमी । यंपरमभिमुखीभूयअयात्आययौरजकंकश्चिदायातामित्युक्तेः। अस्यरजकस्यजन्मसंसारंभविष्य
ज्जन्मवाऽत्तीतिजन्मादीतन्मोचकः । एतेनरजकवधाद्वस्त्रापहारलीलासूचिता । अनुपश्चात्इतरतः इतरयोर्मालाकारशौचिकयोः अर्थेषुपु
ष्पमालानानावस्त्ररूपवस्तुषुज्ञःकपटरहितमाभ्यामिदंदत्तमितितत्वाबित्यःपरःआदिंसर्वकारणंकौतिस्तौतीत्यादिकविस्तस्मैप्राहनःसार्थ
कंजन्मेत्याद्युक्तेः । मालाकारायवायकायचअभिभियोभावमातेने । ततोवरानदात्तुष्टःसुदाम्नोवायकस्यचेत्युक्तेः । किंचयत्येनपरेणब्रह्मह
त्परेऽनुरक्तचित्ता । धर्षितात्माददौसांद्रमित्याद्युक्तेः । अंगरागार्पणपरितुष्टस्वदेहार्जवकारकपरनिष्ठचित्ताकुब्जातथाधाम्नाऋजुक्तेनश
रीरेणतेजःपरमसौंदर्यमवारिस्वीकारिता । किंचयत्रधनुषित्रिसर्गः । तालत्रयंमहासारंधनुर्यष्टिमिवेभराडित्युक्तेस्तालत्रयप्रमाणनिश्चयः
अमृषासत्योस्ति । तद्दृढंधनुर्मृदांभंजनमवारिप्रापितं । अवौनागेकुवलयापीडेनिमयःसंगोयस्यसःहस्तिपकश्चमृदांमर्दनमवारि । एताव
ताहस्तिवधलीलासूचिता । दंतमुत्पाव्यतेनैवहस्तिपांश्चाहनद्धरिरित्युक्तेः । सूरयोमथुरावासिनोयथामुह्यंतितथास्वेनात्मनासतांवसुदेवादी
नामानिरस्तंकुहकंमानसदुःखंयेनतंपरंसत्यंसतांपालकंधीमहि ॥ ९३ ॥ २७ ॥ रंगोत्सवमल्लवधलीलामाह ॥ ॥ जन्माद्यस्य यतो
ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सूरऽयः ॥ तेजोऽवारिमृदां ऽऽयथा ऽविनिमयो यत्र
त्रिसर्गो मृषा धाम्ना स्वेनसदानिरस्तकुहकं सत्यं परं धीमहि ॥ ९४ ॥ २८ ॥ ॥ यःजन्मनाद्योबलदेवःतस्यान्वयात्संगात्इतरतःप्रा
प्ततोषःस्वरेणनूपुरध्वनिनोपलक्षितःसन्नटतीतिस्वराट्स्वरेणमल्लदुंदुभिनिर्घोषेणाटतीतिवा । बलांतौरुतनूपुरावित्युक्तेः ॥ मल्लदुंदुभिनिर्घो
षंश्रुत्वाद्रष्टुमुपेयतुरित्युक्तेश्च । ज्ञःसर्वकलानिपुणःअभिभियोऽभावंतेनेरंगेनिर्भयंननर्त्तेत्यर्थः । येसूरयःशस्त्रशास्त्रव्यवहारज्ञानपंडिताःनंद
वसुदेवपुरांगनागोपदुष्टभूपकंसमल्लमूर्खलोकमहामुनियदुवंशावतंसाःयतःपरस्मात्अर्थेषु रौद्रोद्भुतश्चशृंगारोहास्यंवीरोदयौतथा ॥ भयान

कश्चबीभत्सःशांतःसप्रेमभक्तिकइतिस्वाम्युक्तदिशामल्लानामशनिरित्यादिपदोपस्थापिततयास्वस्ववासनानुरूपभावनापरिपाकेनतत्तद्र
सास्वादेषुसत्स्वितिशेषः । आदिकवयेसकलकलापंडिताययद्यस्मैज्ञातुंयथामुह्यंतिहर्षदुःखादिनाविचित्ताभवंति तथाब्रह्महृदावेदाभि
प्रायभूतेनयेनपरेणतेजोऽवारिस्वीकृतंमहिमाप्रकाशितइत्यर्थः । किंचयत्रेतिअव्ययत्वात्यस्मात्परस्मात्मृदामुष्टिप्रहारेणहेतुनाऽविनिम
योयथाक्रमंत्रिभिश्चाणूरशलतोशलकैरधिष्ठितःसर्गःसमूहःधाम्नाशरीरैर्मृषामिथ्यासीत्सर्वेमृताःपलायिताश्चासन्नित्यर्थः । चाणूरेमुष्टिकेहते॥
शेषाःप्रदुद्रुवुर्मल्लाइत्युक्तेः । स्वेनेतिसामान्याभिप्रायेणैकत्वं । स्वैःपुरजनैरानिरस्तंस्वीकृतंकुहकंमोहोयस्मात्तंपरंसत्यंसदाधीमहि । आं
स्मृतौ ॥महानयंबताधर्मएषांराजसभासदामित्याद्युक्तेः ॥ ९४ ॥ २८ ॥ कंसवधलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरत
श्चाऽऽर्थेष्वऽभिज्ञः स्वराट् तेने ऽब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः॥तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गौ मृषा धाम्ना
स्वेऽन स दानिरस्तकु ह कंसत्यं परं धीमहि ॥ ९५ ॥ २९ ॥ ॥ आदिःअकारादिःकविरादिकविस्तस्मैअकवयेमूर्खायययस्मैकं
सायअस्याकारस्यार्थआर्थोविष्णुःसइषुर्यस्यसआर्थेषुःशिवःरथचरणपाणिःशरइतिपुष्पोदंतोक्तेः । आआर्थेषुरुद्रमारभ्य ।इहाङव्ययीभा
वोविभक्त्यर्थे । विनिमयोदेवाःसूरयऋषयश्चमुह्यन्तिस्मयतोबिभ्यतीत्यर्थः ।क्रिययायमभिप्रैतितत्रापीतिचतुर्थी।कंसतीतिकंसःकंसनामक
इत्यर्थः । कसिगतिशासनयोरितिकंस्तेशास्तिसर्वानितिकंसः रावणःकंसइवाचरतीतिकंसतिइतिनामधातोःशतृप्रत्ययःकंसतीतिकंसस्त
स्मिंस्तथा । एतावताकंसनामनिरुक्तं । यद्वाकंमस्तकंस्यतिश्रीरुद्राराधनार्थंछिनत्तीतिकंसःयत्रअस्वेस्वेतरास्मिन् । पूर्वादित्वात्पाक्षिकः
स्मिन्नास्ति।शत्रौत्रिसर्गःजन्मत्रयंरावणादिवन्नास्ति । कालनेमिकंसाख्यजन्मद्वयवत्त्वात् । अब्रह्महृत्परविमुखःस्वराट्स्वानांपरस्यज्ञा
तीनांयदूनांराट्राजादाःखण्डकःसःकंसाख्यःशत्रुःयतोयस्यपरस्यान्वयात्केशाकर्षणमञ्चाधःपातनरूपसंबंधात्मृदांधाम्नापार्थिवशरीरे
णयथामृषामिथ्याभवेत्तथाऽभिज्ञः सर्वोपायवित्यःपरःवारयातिशत्रुमितिवारिनवारिअवारिअनिवारितंवानिरस्तकुकंसनिपातनाज्जितभू
तलंतेजःपौरुषंआतेने ।व्यवहिताःछंदसीत्याङासंबंधः। अहोऽनेनकंसोनजितःकिंतुसर्वंभूतलंजितंकंसस्यापिसार्वभौमप्रायत्वादितिभावः।

हहर्षेजन्माद्यस्यबलदेवस्यान्वयात्संबंधात्इतरतोऽन्येकंकन्यग्रोधकादयःमृदांधाम्नामृषाऽभवन् । तस्यानुजाभ्रातरोष्टौकंकन्यग्रोधकादय इत्यारभ्यसंयुतान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्येत्यंतोक्तेः । अंवासुदेवंतंपरंधीमाहि ॥ ९५ ॥ २९ ॥ विद्याध्ययनगुरुपुत्रानयनादि लीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमाहि ॥ ९६ ॥ ३० ॥ ॥ जन्मना द्यःप्रथमोब्राह्मणस्तस्यसांदीपिनेःअन्वयादध्ययनरूपसंबंधात्सेवनाद्वाअर्थेषुवेदवेदांगादीनामभिधेयेष्वभिज्ञःयतःयत्नवान्स्वराट्बलदेव सहितःयःपरःगुर्वाज्ञयाइतरतःसमुद्रांतःपातालेचब्रह्मब्राह्मणपुत्रंहरत्यानयतीतिब्रह्महृत् । हरणंस्तेयंनाशनंप्रापणंचेत्युक्तेर्हृञ्हरणइत्यस्य प्रापणमप्यर्थः । अहंचतद्ब्रह्मकुलेइतिब्रह्मक्षत्रविशांमध्यइत्यादौचब्रह्मपदंब्राह्मणपरंगुरुपुत्राहरणशीलंतेजःपौरुषमातेनेआदिकवयेयत्य स्मैपरस्मैयंद्रष्टुंसूरयः । परिकरापेक्षयाबहुत्वम् । यमादयःयथामुह्यंतियत्रपरस्मिन्स्थितेनस्वेनस्वाभाविकेनधाम्नाप्रभावेणवारिसमुद्रजलं मृद्वातिक्षोभयतीतिवारिमृद्तेनाविनिमयःविपरीतस्वभावःत्रयःसर्वविलक्षणाःसर्गाःस्वभावरेखात्मकाःयस्यसःचक्रगदापद्मैस्त्रिभिरायुधैःस र्गःसंगोयस्येतिवाशंखासुरःपांचजन्यनामेत्यर्थःतथामृषासीत् ।यमलोकाद्गुरुपुत्रमानीयसतांमात्रादिजनानामानिरस्तंकुहकंदुःखंयेनतंसत्यं सत्प्रातिज्ञंपरंधीमहिआस्मृतौ । सांदीपिनेःसकृत्प्रोक्तंब्रह्माधीत्यसविस्तरम् ॥ तस्मैप्रादाद्वरंपुत्रंमृतंपंचजनोदरादित्युक्तिरत्रमानत्वेनो ह्या ॥ ९६ ॥ ३० ॥ गोकुलसंदेशदानकुब्जानुग्रहपांडवसांत्वनादिलीलामाह ॥ ॥ जन्मा ऽऽद्यऽस्य यतोऽन्वऽयादितरतश्चाऽर्थेष्वऽ भिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां ऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमाहि ॥ ९७ ॥ ३१ ॥ ॥ यतःयत्रगोकुलेजन्मादिअस्यगोकुलस्यलक्षणयामंचाःक्रोशं तीतिवत्तत्रत्यप्राणिकुलस्यअर्थेषुसंदेशदानेनस्वागमनाशयाप्राणरक्षणनिमित्तंअभिज्ञःप्रेमोल्लासमाधुरीविदःपरस्मात्तदाज्ञयास्वराट्स्वेषु यदुषुश्रेष्ठः।अच्युतवेशभूषणइत्युक्तेर्नोद्धवोण्वपिमन्न्यूनइत्युक्तेश्चज्ञानेनस्वरूपेणवापरसदृशउद्धवइतरतोव्रजंप्रातिअयात् ।अनुकवयेसुखावि

स्तारानिमित्तं। निमित्तेसप्तमी। आदिकारणंब्रह्मपरमेवतेषुहृदातेनेप्राकाशयत्। सूरयःपंडितायेव्रजवासिनःयत्यस्मिन्विषयेमुह्यंतिस्मतेषु संदेशकथनेनपरंसाक्षादकारयदित्यर्थः। भवतीनांवियोगोमेनहिसर्वात्मनाक्वचिदित्याद्युक्तेः। किंचयत्रकुब्जायांनिमयःपूर्वसंगतःत्रिसर्गःकुब्जत्रयसृष्टिर्मृषामिथ्यासीत्। त्रिवक्रनामाह्यनुलेपकर्मणीत्युक्तेः। तदैवर्जुसमानांगीत्याद्युक्तेश्च। साकुब्जासैरंध्रीतिशेषः। तेजःपौरुषमवतिददातीतितेजोऽवृतेनतेजोवास्वसौंदर्यदात्राऽरिमृदाकंसादिशत्रुनाशकेनपरेणयथाऽऽविप्रीताकृता। तद्गृहंगत्वानुगृहीतेत्यर्थः। अवेरर्थेषु दानप्रीणनयोरर्थयोरपिसत्त्वादुभयार्थतेहयुक्तेतिध्येयं। तथास्वेनाक्रूरेणप्रेषितेनसतांकुंतीयुधिष्ठिरादीनामानिरस्तंशत्रुकृतदुःखंयेनतंधाम्नास्वरूपेणसत्यंसर्वदैकरसंतंपरंधीमहिआंस्मरणे॥ ९७॥ ३१॥ अथजरासंधविजयद्वारावतीरचनादिलीलामाह॥ ॥ जन्माऽऽद्यऽस्य यतो ऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ऽब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः॥ तेजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥ ९८॥ ३२॥ यस्यजरासंधस्यइतरतइतरयोर्मात्रोःसकाशाज्जन्मासीत्। भारतेमातृद्वयतएवतदुत्पत्तिश्रुतेः। सुष्ठुनराजतइतिस्वराट्जन्मनिशकलद्वयरूपत्वादशोभनःसकाश्चिज्जरासंधःअर्थेषुमागधस्तुनहंतव्यइतिविचारेषुसत्सुआत्वासुदेवात्यातिगच्छत्यनयेतियाः गमनशक्तिर्नयाअयास्तामयांबंधनमततीतिअयात्प्राप्तबंधनआसीत्पाशैर्वारुणमानुषैरित्युक्तेः। अनुसप्तदशवारपराजयानंतरमष्टादशतसंग्रामेभविष्यतिअभिज्ञःकालयवनागमंजानन्अजःपरःयतःप्रयतःहृदाइच्छयैववारिसमुद्रमध्येनास्तिब्रह्माकर्तृत्वेनान्वितोयत्रततअब्रह्मयत्धामद्वारवतीनगरंतथातेने। अंतःसमुद्रेनगरीमित्युक्तेः। यथासूरयःशिल्पविद्यापंडिताविश्वकर्मादयोपिमुह्यंति। किंचआदेःपरस्यसकाशात्कवयःसुखविस्तारोयत्रतदादिकवयंतास्मिंस्तथायत्रधाम्नितेप्रासिद्धावास्तोष्पत्यादयः। वास्तोष्पतीनांचगृहैरित्युक्तेः। विनिमयोदेवाःत्रयाणांसंकर्षणप्रद्युम्नानिरुद्धानांसर्गआविर्भावश्चमृषा। यद्वात्रयाणांकामक्रोधलोभानांसर्गस्त्यागोयस्यसात्रिसर्गोनारदःविनिमयोविगतसंगः। अवात्सीन्नारदोभीक्ष्णंकृष्णोपासनलालसइत्युक्तेः। मृदांभुवःस्वेनधनभूतेनतेनधाम्नाद्वारवत्या। अहोबतस्वर्यशसस्तिरस्करीकुशस्थलीपुण्ययशस्करीभुवइत्युक्तेः। सतांयादवानामानिरस्तंकुहकंजरासंधादिजंदुःखंयेनतं

परंसत्यंसद्रम्यंधीमहि ॥९८॥३२॥ मुचुकुंदानुग्रहलीलामाह ॥ ॥जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृ
दा य आदिकवये मुह्यंति यत्सूरयः॥तेजोवाऽऽरिमृदां ऽयथाऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि
॥९९॥३३॥आद्यस्यसूर्यस्यान्वयाद्वंशाद्यतोयस्यमुचुकुंदस्यजन्माभूत्। दैत्यवधायेंद्रप्रार्थनया स्वःस्वर्गमाटत्यागच्छतीतिस्वराट्ततश्चा
र्थेषुसुतामहिष्योभवतइत्यादिदेववाक्याभिधेयेषुअभिज्ञःयःमुचुकुन्दःइतरतोभूमावागत्येतिशेषः। अवौपर्वतेनियमःसंगोयस्यसःपर्वतगुहां
तःशायी।गिर्येंडेभेष्ववि:स्मृतइत्यनेकार्थचिंतामणिः। अनुनिद्राभंगानन्तरंअरिंदृष्टचरपलायमानकृष्णांबरेणतमेवशयानंमत्वापादेनप्रहरंतं
कालयवनंमृद्नातिसंहरतीत्यरिमृद्तेजःदेववरहेतुकंदृक्पातात्तद्देहजन्यंवह्निमातेने।सत्वयादृष्टमात्रस्तुभस्मीभवतुतत्क्षणादित्युक्तेः। किंचआ
दिकारणंब्रह्मतेजस्तेजोरूपं ।तेजसातेऽविषह्येणेत्युक्तेः । परमपिहृदामनसातेनेसाक्षाच्चकार । कवयेस्तुवतेयतयस्मैमुचुकुन्दायथम
नुगृहीतुंप्रार्थितमोक्षदानासामर्थ्यात्सूरयःसर्वज्ञादेवामुह्यंति । ऋतेकैवल्यमद्यनइत्युक्तेः । यत्रधाम्नित्रयाणांब्रह्मविष्णुरुद्राणांसर्गःएतेषुत्रि
षुकश्चिदेषस्यादितिनिश्चयःअमृषासत्यः । मन्येत्वांदेवदेवानांत्रयाणांपुरुषर्षभमित्युक्तेः । स्वेनस्वकीयेनधाम्नातेजसासतोमुचुकुंदस्या
निरस्तंकुहकंमोहोयेनतं । मांप्रपन्नोजनःकश्चिन्नभूयोर्हतिशोचितुमित्याद्युक्तेः । यद्वाकुहकंवैपरीत्यंतच्चविप्रेतरदेहेमोक्षावाप्तिरूपं । भू
त्वाद्विजवरस्त्वंवैमामुपैष्यसिकेवलमितिश्रीमुखोक्तेः । यद्यपिप्रभुत्वादन्यदेहेपियथाकथंचिन्मुक्तिंददात्यपिहरिस्सएषसाधोचरमोभवाना
मित्याद्युक्तेस्तथापिक्रममुक्तौब्राह्मणदेहस्यैवमुक्तिसाधनसंन्यासपूर्वकश्रवणाद्युपयोगित्वान्नकिंचिदवद्यम् । सत्यंसत्यवक्तारंपरंमोक्षदत्वेन
सर्वोत्कृष्टंधीमहि।तेजइत्यावृत्त्यायोज्यम् ॥ ९९ ॥ ३३ ॥ रुक्मिणीहरणलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थे
ष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवा ऽऽरि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना
स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ १०० ॥ ३४ ॥ ॥ यतःयःपरःजन्माद्यस्यदूतब्राह्मणस्यान्वयात्संदेशपत्रिकादानसंबंधा
तअर्थेषु श्रुत्वागुणान्भुवनसुंदरेत्यादिवाक्यतात्पर्येषुअभिज्ञःसन्श्वोविवाहकालंज्ञात्वादारुकसज्जीकृतरथमारुह्यइतरतःकुण्डिननगरेस्वे

नात्मनैवराजतइतिस्वराट्अभूदित्यर्थः । ततश्चब्रह्मणिविदर्भप्रवेशानन्तरप्रेषितदूतब्राह्मणेहृतमनोयस्यतेनरुक्मिण्यैकिंकथयेदितिदूत
द्विजलग्नमनसापरेणैवअयेशुभावहविधौदुर्गार्चनकालेईलक्ष्मीरूपिणीरुक्मिणी । कर्म । देवत्वेदेवतासाचमानुषत्वेचमानुषीत्युक्तेः ।
आदेरसेषुप्रथमस्यशृंगारस्यकंसुखमादिकंतस्यवयोविस्तारोयस्याःसाताद्दशीस्वस्यसमागतराज्ञांचशृंगाररसोल्लासिकातथातेनेकल्पि
ता । तावीक्ष्यतेनृपतयस्तदुदारहासेत्याद्युक्तेः । यात्राछलेनहरयेऽर्पयतींस्वशोभामित्युक्तेश्च । यत्यस्याःरुक्मिण्याःसकाशात्सू
रयःशस्त्रशास्त्रविद्यापंडिताश्चैद्यादयोमुह्यंति । अहोधिगस्मान्यशआत्तधन्विनामित्युक्तेः । तेजःपौरुषमवतितदानींरक्षतीतितेजोवा ।
अहत्वादुर्मतिंक्ष्णमित्यादेस्ताद्दग्विकत्थनपरःरुक्मीयत्रपरस्मिन्स्वेनधाम्नायदधिकरणकात्मीयप्रभावेणमृदांकेशश्मश्रुलवनपूर्वकंमर्दन
मारिप्रापितः । चैलेनबध्वातमसाधुकारिणंसश्मश्रुकेशंप्रवपन्व्यरूपयदित्युक्तेः । त्रयोहिरण्यकशिपुरावणशिशुपालाख्याःसर्गा
जन्मानियस्यसत्रिसर्गश्चैद्यःविनिमयोदेवानभवंतीत्यविनिमयोराक्षसाःशाल्वादयोमृषामिथ्याअभवन्मृताइवाभवन् । तत्रशाल्वोजरासं
घोदंतवक्रोविदूरथइत्याद्युक्तेः । किंचसद्भिर्द्वारकावासिभिर्भक्तैःसहानिरस्तंस्वीकृतंकुहंभूगतंकंसुखंयेनतम् ॥ हन्धातोर्गत्यर्थत्वात्कुंपृ
थ्वींहंतिगच्छतीतिकुहम् । डप्रत्ययः । निरस्यतेत्यज्यतइतिनिरस्तंनानिरस्तमनिरस्तंतदेवआनिरस्तम् । स्वार्थिकोण् । तंपरं
सत्यंसतांपालकंधीमहि ॥ १०० ॥ ३४ ॥ अथजांबवतीसत्यभामापरिणयनलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वऽयादित
रतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवारि मृदां यथा ऽविनिमयो यत्रत्रि
सर्गो मृषा धाम्ना स्वेनसदा निरस्तकु हकं सत्यं परं धीमहि ॥ १०१ ॥ ३९ ॥ ॥ अर्थेषुसिंहकर्तृकप्रसेनवधस्यमंतकरत्नक
न्यालाभादिष्वभिज्ञःपरःयतोहेतोःयतःयस्याईशब्दनिर्देश्यायाजांबवत्याः जन्मनिआद्यस्यकारणस्यपितुर्जांबवतःमृदांबाहुयुद्धेनमर्द
नमातेने ॥ इतरेतरमुष्टिभिः ॥ निष्पिष्टांगोरुबंधनइत्याद्युक्तेः । अतोहेतोर्ब्रह्महृदापरेणैवांतिनिकटेझटितिवास्वेनधनप्रदेनम
णिनाराजतइतिस्वराट्ईलक्ष्मीर्जांबवतीयथाआयेप्रापियेनतंधीमहीतियोज्यम् । अयगतौकर्मणिलिट् । आमभावआर्षः । अनुजां

बवतीप्राप्त्यनंतरंइतरतोद्वारकामयात् ॥ किंचअंसूर्यरूपंवासुदेवंयातिसेवतइत्ययास्तस्मात्अयः यत्यस्मात्पितुःसत्राजितइतिशेषः ॥
सूः यस्याजन्मासीत्यद्वासूरंसूर्यंयातिसेवतइतिसूरयास्तस्मात्सूरयःसूर्यभक्तात् । सूरयइतिसमस्तांविशकलितंचान्वेति । आदेःसू
र्यस्यपरस्यवाकवयेस्तुवतेभक्तायतस्मैसत्राजितेनिरस्ताकुर्भूमिर्येनतन्निरस्तकुभूमावलम्ब्यमलौकिकमितियावत् । तेजःस्यमंतकंरत्नम्
ददातीतिदाःददानः । क्विबत्रकर्त्तरि । सत्राजितेमणिंअदात् । सूर्यस्तुष्टःस्यमंतकमित्युक्तेः । तवास्तांदेवभक्तस्येत्याद्युक्तेः परोपित
स्मैमणिंददौ । त्रयाणांलोकानांसर्गोयस्मात्सत्रिसर्गःसःपरःस्वेनरत्नेनसहअमृषासत्यंधामसौंदर्यंयस्यास्तयामयालक्ष्म्यासत्यभामयातथा
ऽवारिवृतः।भामोधामचतेजसीत्युक्तेर्भामधामशब्दयोरेकार्थत्वादमृषाधामेतिपदेनसत्यभामेतिनामनिरुक्तं।अमुहिमोहरहितेऽविनिजगद्रक्ष
के त्रपरस्मिन्नसत्यमविनाशिकंसुखमस्ति।उसंबुद्धौतंत्वांपरंधीमाहि॥हहर्षेहेहरेयद्वाहेहहांतिभक्तविरोधिनमितिहः।डोऽत्रप्रत्ययऔणादिक
स्तत्संबुद्धौहेहेतितमितिशेषः । यतइतिपदमत्रावृत्त्यायोज्यम् ॥ १०१ ॥ ३६ ॥ कालिंदीमित्रविंदाभद्रालक्ष्मणासत्यानांपरिणयनली
लामाह ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥
तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०२ ॥ ३६ ॥ तेजो
वारियामुनजलधाम्नाकृतेनस्थानेनहेतुनास्वंपरमिनमिवसीदतीतिस्वेनसद्वतया।कालिंदीतिसमाख्यातावसामियमुनाजले॥ निर्मितेभवने
पित्रायावदच्युतदर्शनमित्युक्तेः । अथतत्रमृगयार्थंगतःस्वराट्अर्जुनसहितःपरःयथाआयेप्राप्तःअभिज्ञःपरस्यआद्यस्यजन्मकारणस्यवसु
देवस्यअनुअनंतरंयतःययोःराजाधिदेवीश्रुतश्रवसोर्जन्मताभ्यांवसुदेवानुजाभ्यांहेतोःयतययोःयतःमित्रविंदाभद्रयोःसूर्जन्माभूत्तयोरिति
शेषः। इतरतश्चान्ययोरपिवर्णितरुक्मिणीजांबवतीसत्यभामाकालिंदीमित्रविंदाभद्राभ्यःवर्णयिष्यमाणषोडशसहस्रमहिषीभ्यश्चभिन्नयोः
पारिशेष्यान्मद्रराजनग्नजित्पुत्र्योर्लक्ष्मणासत्ययोःअर्थेषुस्वयंवरमत्स्यलक्ष्यवेधवृषभबन्धनादिषुविषयेषुअयात्तत्रतत्रगमनात्आदिक
स्यशृंगारसुखस्यवयेविस्तारार्थंहृतहरणंपरिग्रहस्तथाऽऽतेनेकृता । तेनपरेणेतिशेषः। यत्रपरास्मिन्अमृषारोषेणोपलक्षिताअविनिमयो

राक्षसास्तिग्मस्वभावाराजानःशिशुपालादयःमृदायद्धमर्दनेनमुह्यंतिपराजयादितिभावः । किंभूतःपरःत्रयाणांलोकानांसर्गोमोचकस्त्रिस
र्गःतत्रहेतुःअयःशुभावहः।ददामिबुद्धियोगंतंयेनमामुपयांतितइतिश्रीमुखोक्तेः। आंस्मरणे। निरस्तानाममराणामपिकुहकंविस्मापकंसत्यं
नित्यंब्रह्मततत्परंधीमहि । अत्रमानानिराजाधिदेव्यास्तनयांमित्रविंदांपितृष्वसुरिति । सुतांचमद्राधिपतेर्लक्ष्मणामिति।नग्नजिन्नामकौश
ल्यइत्यादीनियथायथमूह्यानि ॥१०३॥३६॥महिषीविवाहहेतुकभौमवधमहेंद्रविजयादिलीलामाह॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वयादि
तरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेनेऽब्रह्म हृदा ऽऽय आदि कवये ऽमुह्यंति यत्सूरऽयः॥ तेजोवारिमृदां ऽऽयथा ऽविनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥१०३॥ ३७॥ ॥ मृद्मृण्मयीभूदेवीयतयस्यनरकस्यामुहीमुह्यत्यनेनेतिमुहो
वैचित्यंनमुहोययासाऽमुहीमाताजीवन्मातृकस्यसदैवस्वास्थ्यदर्शनात् । अवौहस्तिनिनिमयःसंगोयस्यसतथात्रिषुलोकेषुसर्गःसंबंधोयुद्धा
दिनायस्यसःत्रिलोकविजयीनरकासुरः। कर्म । सुतंमृधेखंवपुषाग्रसंतमितिभूसुतत्वेगजैःपयोधिप्रभवैर्निराक्रमदितिहस्तिसंगत्वेइन्द्रेणहृ
तच्छत्रेणेत्यादित्रिलोकविजयित्वेचक्रमान्मानमूह्यम् । यत्रपरस्मिन्नस्थितेनधाम्नातेजोमयेनचक्रेण । कंशिरोंबुनोरितिविश्वः ।कस्यशि
रसोवयोविस्तारःकवयस्तास्मिन्गलप्रदेशेस्वआत्मैवइनःप्रभुःस्वेनस्तंपरस्वरूपंप्रभुंसीदन्तिप्राप्नुवंतीतिस्वेनसदाः।टाबत्रभागुरिमतेन ।
स्वस्मिन्पतिबुद्धिंकुर्वंत्योनरकरुद्धाराजकन्यास्तासामानिरस्तंकुहकंबन्धनदुःखंयस्मिंस्तद्यथातथाआदिभक्षितःअर्थातयदीयचक्रेणशिर
सिछिन्नइत्यर्थः।नरकस्यशिरोहरिः ॥ अपातयद्गजस्थस्यचक्रेणेत्याद्युक्तेः । अनुभूदेवीप्रार्थनयातत्पुत्रमभिषिच्यछत्रकुण्डलदानार्थंअंति
स्वनिकटेस्वर्लोकइत्यर्थः । अयात्गतातअभिज्ञःसर्वज्ञात्परस्मात्सकाशात्स्वराट्इंद्रःआद्यस्यवामनरूपस्यपरस्ययतोयस्याअदित्याःस
काशात्जन्मतस्यामातुरर्थेषुकुण्डलरूपधनेषुविषयेइतंप्राप्तंरतंसंतोषोयेनसःकुण्डललाभेनतुष्टःसन्यथाहृतचित्तमब्रह्मपरविमुखंतेने । त
थासूरयोदेवाअपिहृदाब्रह्मातेनुरित्यर्थः । सचेंद्रस्तेनययोधदेवास्तत्साहाय्यार्थंयुयुधरित्यर्थः । यथाचआनम्यकिरीटकोटिभिरित्युक्तेः ।
सिद्धार्थएतेनविगृह्यतेमहानहोसुराणांचतमोधिगाढ्यतामित्युक्तेः । नमृष्यतिक्षमतइत्यमृट्तेनतदातिक्रममसहमानेनपरेणतेनअजःइन्द्रः

अजातिक्षिपतिनमुच्यादीनित्यजइतिव्युत्पत्तेःअवारितेसूरयोदेवाअपिअवारिषतानिवारिताइत्यर्थः । अतएवस्वर्लोकात्कल्पद्रुममानीयस
त्यभामागृहोद्यानआरोप्यपालितसत्यवाक्यत्वात्सत्यंसत्यययायुक्तंवातंपरंआंस्मृतौधीमहि ॥ १०३॥ ३७ ॥ शम्बरमारणप्रद्युम्नलाभलीला
माह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो
वारि मृदां ऽऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०४ ॥ ३८ ॥ आत्परस्मात्यस्य
प्रद्युम्नस्यजन्मासीत्प्रद्युम्नआसीत्प्रथमइत्युक्तेः । यद्यस्मात्कन्दर्परूपात्सूरयःपराशराद्यामुनयः यथामुह्यंतितथाविनिमयःशिवेंद्रप्रभृत
योदेवाश्चमुह्यंतिच्युतधैर्य्याभवंति । प्रसिद्धंचैतदग्रेपुराणांतरेच । स्वेनंस्वपतिंकन्दर्पंप्रद्युम्नंसीदातिभजातिनारदवाक्येनेतिस्वेनसद्रातिः ।
नारदोऽकथयत्सर्वंशम्बराहरणादिकमित्युक्तेः । अहंतेऽधिकृतापत्नीरातिःकामोभवान्प्रभोइत्युक्तेश्च । तयामायावत्यासहअन्वयात् । शंब
रदत्तमत्स्योदरनिष्कासनसम्बंधात् अर्थेषुपालनादिषुसत्सुइतंप्राप्तंरतंशृंगारलीलायेनसइतरतः । प्रीत्योपतस्थेरतिरंगसौरतैरित्युक्तेः ।
स्वराट्स्वतःसुन्दरःयतःसावधानःत्रिभिर्वासुदेवसंकर्षणानिरुद्धैःसर्गःसंबंधोयस्यसचतुर्व्यूहांतःपातीप्रद्युम्नःत्रिलोकोत्पादकोवाब्रह्मतपोहर
तिनाशयतिशृंगिप्रभृतीनामितिब्रह्महृत् । यद्वाहृदःकामोभ्रुवोलोभइत्युक्तेर्ब्रह्मणःपरमेष्ठिनोहृतत्हृदयजःब्रह्मणःपरस्यवाहृत् । गोभिःश्रिणी
तमत्सरमितिवत्कारणीभूतेहृदयेकार्यभूतहृदयजशब्दबोधोनविरुद्धः । यःआदेःरसेष्वाद्यस्यशृंगारस्ययत्कंसुखंतस्यवयोविस्तारेऽभिज्ञःअ
भिज्ञातुःरक्षकमुखाच्छ्रुतवृत्तस्यशम्बरस्यमृदायुद्धमर्दनेनतेजःपौरुषमातेनेसस्वपुत्रःप्रद्युम्नःमायावत्यासहद्वारकांप्रविष्टःअमृषाधाम्नासत्य
प्रभावेणयेनपरेणनारदवाक्यान्निरस्तकुहकंनिःसंदेहंयथास्यात्तथावाशब्दोवाक्यालंकारेआरिप्राप्तःानारदोकथयादित्याद्युक्तेः । तंसत्यंसत्य
पालकंपरंधीमहि । शम्बरस्याशिरःकायादित्युक्तेः ।भार्ययांबरचारिण्यापुरंनीतइत्युक्तेश्च॥१०४॥३८॥ बाणयुद्धेरुद्रविजयलीलामाह॥ ॥
जन्माद्यस्य यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा
विनिमयो यत्र त्रिसर्गो ऽमृषाधाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि॥१०५॥३९॥ ॥ मातमकारवाच्यात्कन्दर्पात्प्रद्युम्नात् ।मः

कामइतिकथ्यतइतिकोशात्। यस्यानिरुद्धस्यजननंजन्म।जायतेःक्विप्दीर्घनलोपौत्वार्षत्वान्न।आसीदितिशेषःप्रद्युम्नाच्चानिरुद्धोभूदि त्युक्तेः । सयतःस्वप्रदर्शनाच्चित्रलेखयात्मानंनीतवत्योषयारममाणोबाणबद्धआसीत् चित्रलेखातमाज्ञायेत्याद्युक्तेः । तन्नागपाशैर्बलि नन्दनोबलीत्याद्युक्तेश्च । यतइतियमङपरमेत्कोनुनासिकलोपश्च । अनुततोनारदवाक्यात्तज्ज्ञःतद्वृत्तांतंजानन्। नारदात्तदुपाकर्ण्यवार्त्तांब द्धस्यकर्मचेत्याद्युक्तेः।स्वैर्बलप्रद्युम्नादिभिःसहराजतइतिस्वराट्।यःपरःइतरतःअन्यद्बाणपुरमयात्। प्रययुःशोणितपुरंवृष्णयःकृष्णदेवताइ त्युक्तेःब्रह्महृत्परतत्ववेत्ताशिवोपियत्तेजःज्वरस्वरूपमातेने । त्रयाणांपादानांशिरसांवासर्गोयस्मिन्सःदाःखण्डकःज्वरआयआगतः । विद्राविते भूतगणेज्वरस्तुत्रिशिरास्त्रिपादित्युक्तेः स्वेनधाम्नानिजोत्पादितेनज्वरतेजसाआदिभक्षितःखंडितइत्यर्थः । वैष्णवेनबलार्दितः॥ भीतोमाहेश्वरोज्वरइत्युक्तेः । कवयेपरमसुखविस्तारकेयत्रयस्मिन्विषयेउःशिवस्तस्यारआगमनंवारःप्रशस्तोवारोऽस्यास्तीतिवारी बाणासुरः।भूमनिंदाप्रशंसासुनित्ययोगेतिशायने । संबंधेस्तिविवक्षयांभवंतिमतुबादयइत्युक्तेः प्रशंसायामिनिः । पुरपालत्वेनव्रियत इतिवारोवा । सतंवव्रेपुराधिपमित्युक्तेः । तस्यमृदांयुद्धेमर्दनमभिलक्ष्यअस्यार्थआर्थोविष्णुःसइषुःशरोयस्यसआर्थेषुःआआर्थेषोःआर्थेषु अव्ययीभावः । रुद्रमारभ्यसूरयोपिअमृषाऽमर्षेणोपलक्षिताःविनिमयोदेवागणेशादयःप्रमथगणाश्चमुह्यंतियुद्धायसज्जीभूयगच्छंति । य थानिश्चितं । बाणाथभगवान्रुद्रोययावित्याद्युक्तेः ततश्चआनिरस्तंकुहकंबाणगर्वोयेनतं यद्वा सतांयादवानांचानिरुद्धानयनेनकुहकं दुःखंयेनतंसत्यंसत्यस्वरूपंपरंधीमहि ॥ १०५॥ ३९॥ अथप्रसंगागतरुक्मिवधलीलांरुक्मिणीगर्ववारणलीलांचाह ॥ ॥ जन्माद्यस्य यतो ऽन्वऽयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ऽब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना ऽस्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०६ ॥ ४० ॥ ॥ योऽब्रह्महृत्परविमुखःरुक्मीआ दिकवयेऽनिरुद्धाययत्त्रययात्रिसर्गोभूत्तांतेनेददौ। यःसात्वतांकामदुघोनिरुद्धः। यमामनंतिस्महशब्दयोनिमित्युक्तेरनिरुद्धस्यशब्दयोनि त्वोक्त्यादिकविस्वं।यत्रेत्यत्र तृतीयार्थेत्रल्। तृतीयःसर्गःसम्बधस्त्रिसर्गः। पृषोदरादित्वात्तृतीयस्यत्र्यादेशः। तांरोचनांप्रथमःसम्बन्धोरु

क्मिण्याभगिन्याद्वितीयःस्वयंवरहृतपुत्र्यातृतीयोरोचनयापौत्र्येतिविवेकः । दौहित्रायानिरुद्धायपौत्रींरुक्म्यददाद्धरेः । रोचनांबद्धवैरो
पीत्युक्तेः । अर्थेषुभगिनीप्रीत्यर्थंस्वसुःप्रियाचिकीर्षयेत्युक्तेः।अभिज्ञःसन् । जानन्नधर्मंतद्यौनामित्युक्तेः । अनुपश्चात्जन्मनाऽद्यःप्र
थमोजन्माद्योबलस्तस्यतथातृतीयार्थेषष्ठीयं । जन्माद्येनसहतेजसोरत्नानांप्रतापस्यचवारिनाशकमक्षक्रीडारूपंद्यूतश्चतेनेचकार ।
न्यर्बुदंग्लहमाददेइत्याद्युक्तेः । बलमाहूयतेनाक्षैरुक्म्यदीव्यतेत्युक्तेश्च । किंभूतंनिरस्तानांदेवानामपिकुहकंविस्मापकं । तदाब्रवी
न्नभोवाणीत्युक्तेः । यतोयेनद्यूतेनसमृदांनाशमयात्प्रापइतरतइतरेचमृदामयुः । क्रुद्धःपरिघमुद्यम्यजघ्नेतंनृपसंसदीत्युक्तेः । कलिंगरा
जंतरसेति । अन्येनिर्भिन्नबाहूरुशिरसइत्युक्तेश्चकिंभूतेनद्यूतेनमृषाऽसत्यंतस्यधाम्नास्थानेन । रुक्मीवदतिवैमृषेत्युक्तेः । यद्यस्मिन्द्यू
तेसूरयोनलयुधिष्ठिरप्रभृतयोविज्ञाअपिमुह्यंतितदासक्ताबभूवुः । वर्तमानसमीपेभूतेत्रलट् । यःपरस्तत्रवधेऽविनिमयोऽविपर्यस्तोभूत् ।
तंपरंधीमहि । निहतेरुक्मिणिश्यालेनाब्रवीत्साध्वसाधुवेत्युक्तेः । अथईलक्ष्मीस्तद्रूपारुक्मिणीयेनोपहासितेतिशेषः । राजपुत्रीप्सिताभू
पैरित्यारभ्यअथात्मनोनुरूपंवैभजस्वक्षात्रियर्षभमित्यंतोक्तेश्च । सत्यंतदुक्तिंसंशोध्ययथार्थमायेजगाद । धातूनामनेकार्थत्वात्तनिरयिश्चा
भिलषितार्थे । जाड्यंवचस्तवगदाग्रजयस्तुभूपान्विद्राव्यशार्ङ्गनिनदेनजहर्थमांत्वमित्युक्तेः । किंभूताअस्याकारपदवाच्यस्यवासुदे
वस्यस्वाधनभ्रिता । आत्मार्पितश्चभवतोत्रेत्याद्युक्तेः । इनंस्वप्रभुंसीदतीतीनसदा । उपतस्थेसुखासीनंजगतांपतिमीश्वरमित्युक्तेः । पु
नःकिंभूताईस्वराट्सुष्ठुनराजतइतिस्वराट् ।पदासुजातेननखारुणाश्रियाभुवंलिखंत्यश्रुभिरित्याद्युक्तेः। स्वराट्सतीसत्यंजगादेतिसंबंधःक्का
र्यः । क्विबंतानांहलन्तानांलिंगकृतोविशेषोऽगम्यप्रायोभवतीति । इहतेनेयतइत्यादिपदानामावृत्त्यासंबंधः ॥ १०६ ॥ ४० ॥ नृगमोक्ष
पौंड्रकादिवधलीलामाह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चार्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति
यत्सूरयः॥तेजो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषाधाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०७ ॥ ४१ ॥
॥ ॥ जन्माद्यस्यब्राह्मणस्यार्थेषुधनेषुप्रदत्तगोपुनर्दानरूपेषुसत्सुयःनृगराजःइतरतइतरत्नीचंजन्मअयात् । कृकलासोऽभवदित्यर्थः ।

तावदद्राक्षमात्मानंकृकलासमित्युक्तेः । अनुअनन्तरं ब्रह्महृदापरेणअभिज्ञः । स्मृतिर्नाद्यापिविध्वस्तेत्याद्युक्तेः । पूर्वस्मृतिमान्दाःदा
ता । यावत्यःसिकताभूमेरित्याद्युक्तेः । गोभूहिरण्यायतनाश्वहस्तिनःप्रादांयुतभ्योद्विजपुंगवेभ्यइत्युक्तेश्च । सनृगःस्वराट्स्वर्गमागतस्ते
ने।स्वर्ग्यद्भुतालंकरणांबरस्रगित्याद्युक्तेः । ततश्चादेःपरस्यकवयेस्तुतिकर्त्रैयत्यस्मैनृगायतंद्रष्टुंसूरयोपियादवामुह्यंति । अहोअस्यकीदृ
शीगतिर्जातेतिविस्मिताआसन्नित्यर्थः । यद्वायस्मिन्नविप्रस्वापहारे । दुर्जरंबतब्रह्मस्वम् । ब्रह्मस्वंहिविषंमन्येनास्यप्रतिविधिर्भुवी
त्याद्युक्त्याकर्णनेनविस्मिताबभूवुः । किंचयत्रपौंड्रकेस्वेनात्मनाऽविनिमयःवेषभूषणादीनामव्यत्ययोभूत् । दृष्ट्वातमात्मनस्तुल्यंवेषंकृ
त्रिममास्थितमित्युक्तेः । सोपितिसृभिरक्षौहिणीभिःसर्गःसम्बंधोयस्यसत्रिसर्गः । अक्षौहिणीभिस्तिसृभिरपश्यत्पौंड्रकंहरिरित्यु
क्तेः । तेनकाशिपतिसाहित्यमुक्तम् । अक्षौहिणीभ्यांसंयुक्तोनिश्चक्रामपुराद्द्रुतमित्युक्तेस्तस्यसेनाऽक्षौहिणीद्वयमेवेतिज्ञायते । यतः
यत्नवान्काशिराजसुतःसुदक्षिणश्च । निहत्यापितृहंतारंयास्याम्यपचितिंपितुः ॥ सोपाध्यायोमहेश्वरंसुदक्षिणोर्चयामासेतितद्यत्न
श्रुतेः । अमृषाधाम्नानित्यश्रीविग्रहेणमृदामर्दनशीलेनचक्रेणनिरस्तकुहकंध्वस्तमायाबन्धनंयथातथातेजःनिजरूपंअवारिस्वीकारितः
। बिभ्राणश्चहरेराजन्स्वरूपंतन्मयोभवदित्युक्तेः । सुदक्षिणपक्षेनिरस्तकुहकंनिरासिताभिचाराग्नियथातथाइतरतश्चक्रापेक्षयातेनैवव
ह्निनातेजःअवारिभस्मतांप्रापितः । सर्त्विग्जनंसमदहत्स्वकृतोभिचारइत्युक्तेः । यद्वामृदाचक्रेणनिरस्तकु ह कंसातिइतिछेदःअस्ता
चासौकुरस्तकुर्नाशशीलाभूःनिर्गताऽस्तकुर्यस्मिंस्तान्निरस्तकुकाशिनगरंतद्धेतिस्फुटंकंसातिशास्ति।वर्त्तमानसमीपेइतिभूतेलट् । यःतंअं
वासुदेवंपरंधीमहि । कसिगतिशासनयोर्भ्वादिरपिधातुः।दग्ध्वावाराणसींसर्वांविष्णोश्चक्रंसुदर्शनमित्युक्तेः । काशीभूःप्रलयेपिननश्यतीति
प्रसिद्धंपुराणांतरे । इहपदानामावृत्त्यान्वयः ॥ १०७ ॥ ४१ ॥ अथबलदेवकृतयमुनाकर्षणादिलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो
ऽन्व ऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ऽब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽविनिमयो
यत्र त्रिसर्गो ऽमृषा ऽधाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०८ ॥ ४२॥ यत्रव्रजेआद्यस्यपरस्यजन्माभूततत्रयःस्वराट्

श्रीबलदेवःअयात् । सहस्रवदनःस्वराडित्युक्तेः । बलभद्रःकुरुश्रेष्ठप्रययौनन्दगोकुलमित्युक्तेः। अर्थेषुसुहृदांदर्शनार्थं । सुहृद्दिदृक्षुरुत्कंठ
इत्युक्तेश्च । पुनस्तत्रइतंप्राप्तंरतंरमणंगोपीभिर्येनसइतरतः । रामःक्षपासुभगवान्गोपीनांरातिमावहन्नित्युक्तेः । तेजोवारिणोयमुनाप्रवा
हस्यमृदांहलाग्रकर्षणेनवक्रतांतेनेचकार । अनागतांहलाग्रेणकुपितोविचकर्षहेत्युक्तेः । अनुतदनन्तरंयथात्रिसर्गोयत्रमृषासयत्सूःयत्पिता
सद्विविदःतेनबलेनअविनिमयोभूत् । त्रयाणांदेहानांसर्गात्रिसर्गःत्रिदेहसंबंधःयत्राश्विनोःकुमारयोर्मृषा । तयोर्द्विदेहसर्गत्वात् । सोश्विकु
मारोयस्यद्विविदवानरस्यसूरुत्पादकः । प्रसिद्धंचैतच्छ्रीमद्वाल्मीकीये । तत्रत्यवाक्यंविस्तरभियानोक्तं । निश्चयेनमीयतइतिनिमयः ।
स्वरांतत्वादःप्रत्ययःमीङ्प्राणवियोगइत्यस्मात् । निमयोनाशःअवौपर्वतेनिमयोऽविनिमयः । गिरिंरैवतकंययौ ॥ पर्वतःकुरुशार्दूलसटंक
इत्युक्तेः। चपुनस्तदनुअस्यवासुदेवस्यधामस्वरूपंअधामसाम्बःआत्मावैपुत्रनामासीतिश्रुतेः। तेनाधाम्नाब्रह्मणःश्रीकृष्णाद्भिन्नस्तद्भक्तिहीं
नोऽब्रह्मादुर्योधनः । सएषदोषःपुरुषद्विडास्तइत्युक्तेः । तस्यहृदाहृदयजापुत्रीअर्थाल्लक्ष्मणा । गोभिःश्रिणीतमत्सरमितिवत्कारणेपिका
र्यप्रयोगः । तथाआयेप्राप्ता । दुर्योधनसुतांराजँल्लक्ष्मणांसमितिंजयः ॥ स्वयंवरस्थामहरत्सांबइत्युक्तेः । यद्यस्मात्सूरयोभीष्माद्याअ
पिमुह्यंति यद्बंधनायाकुलाभवंति । बध्नीतेमंदुर्विनीतंकुरुवृद्धानुमोदिताइत्युक्तेश्च । यतोयदर्थं । इनःस्वामिनिसूर्येचेतिकोशात्स्वानांभ
क्तानामिनःस्वेनःश्रीकृष्णस्तंसीदातिभ्रातृभावेनेतिस्वेनसत्तेनश्रीबलभद्रेणनिरस्तानां कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथगित्याद्यु
क्तेःसांबत्रासितानांकुर्भूमिर्वासस्थानंयत्रतान्निरस्तकुहास्तिनपुरंआदिसनातनंचतत्कंजलंआदिकंश्रीगंगारूपंतस्यवयेविस्तारेऽर्थात्प्रवाहे
तेनेऽकारि । लांगलाग्रेणनगरमुद्विदार्यगजाह्वयम् ॥ विचकर्षसगंगायामित्युक्तेः । हस्फुटंयश्चपरःआभिज्ञःसर्वज्ञानवान्तंकंसुखरूपंसत्यंस
तांज्ञेयंपरंधीमहि । इहपदानांबहुशआवृत्त्यान्वयः ॥ १०८ ॥ ४२ ॥ अथनारदायपरयोगमायादर्शनमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो
ऽन्व ऽयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो
यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १०९ ॥ ४३ ॥ ॥ यतोयस्यनारदस्यआद्यस्यब्रह्मणःसकाशा

ज्जन्मसतांतेजसांहीरकमुक्तादिरत्नानामुत्पादकंवारियस्यसतेजोवारिःसमुद्रः।मध्यमपदलोपीसमासः। तत्रयामृदाभूःटाबत्रभागुरिमते।सा
तेजोवारिमृदातांतथाऽर्थात्द्वारकां । तात्स्थ्यात्ताच्छब्द्यमितिन्यायात् । आयेप्राप । अर्थेषुकथमेकेनश्रीकृष्णेनाष्टोत्तरशताधिकद्व्यष्टस
हस्रयोषितांगृहेषुरम्यतइत्युत्कण्ठतयादिदृक्षार्थं । निमित्तेसप्तमी । चित्रंबतैतदेकेनवपुषायुगपत्पृथक् ॥ गृहेषुद्व्यष्टसाहस्रंस्त्रियएकउदाव
हत् ॥ इत्युत्सुकोद्वारवतींदेवर्षिर्द्रष्टुमागमदित्युक्तेः । यत्रद्वारकायांत्रिसर्गस्त्रिगुणकृतःसंसारोमृषाभवति । द्वारकांनगरींदृष्ट्वानरोनारायणो
भवेत् ॥ द्वारकायांमृतःकोपिगर्दभोपिचतुर्भुजइतिद्वारकाखण्डोक्तेः । द्वारावतीपुरीज्ञेयाःसप्तैतामोक्षदायकाइतिगरुडेपिमोक्षप्रदसप्तपुरी
षुगणनादपिमोक्षदेतिसिद्धम् । तदनुब्रह्मह्हत्परःतस्मैकवयेविदुषेयथाययथोदितंआदिसमागतातिथयेप्राक्तनंप्राक्कर्त्तव्यंपाद्यादिरूपमर्चनं
तेनेचकार । संपूज्यदेवऋषिवर्यमृषिःपुराणोनारायणोनरसखोविधिनोदितेनेत्याद्युक्तेः । किंभूतःब्रह्महृतस्वराट्स्वेनकलत्रेणराजतइति
स्वराट् । दासीसहस्रयुतयानुसवंगृहिण्याविप्रोददर्शेत्युक्तेः । ततोनुइतरतइतिसप्तम्यर्थेतसिः । इतरस्मिन्नित्यर्थःगृहेइतिशेषःअयात्ज
गाम । इहान्वितरतइतिपदद्वयंबहुशोयोज्यम् । ततोन्यदाविशद्गेहमित्युक्तेः । स्वोज्ञातावात्मनिस्वंत्रिष्वात्मीयेस्वोऽस्त्रियांधनइ
त्यमरः । स्वेनज्ञातिनोद्धवादिनाराजतइतिवा । मन्त्रयंतंकस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिरित्युक्तेः । यद्वास्वेनात्मीयेनस्वस्यकर्त्तुं
योग्येनपञ्चयज्ञादिनासंध्याजपादिनाराजतइतितथा । यजंतंपञ्चभिर्मखैः ॥ क्वापिसंध्यामुपासीनंजपंतंब्रह्मेत्याद्युक्तेः । यद्वास्वे
नगजाश्वादिरूपेणधनेनराजतइतिस्वराट् । अश्वैरथैर्गजैःक्वापिविचरंतमित्युक्तेः । यद्वास्वैःस्वरयुक्तकंठैरव्यतेस्तूयतइतिस्वराट्। अटेः
कर्मणिक्विप् । धातूनामनेकार्थत्वात्स्तुतावप्यटिः । पर्यंकेस्तूयमानंचबंदिभिरित्युक्तेः । स्वंधनंराजयंतिशोभयंतीतिस्वराणिगोदान
देवयजनेतिहासपुराणादिश्रुतिकूपारामादिकरणरूपाणिकर्माणितैरटातिवर्ततइतिवास्वराट् । कुत्रचिद्द्विजमुख्येभ्योददतंगाः । इतिहा
सपुराणादिशृण्वन्तमित्याद्युक्तेः । यजंतंसकलान्देवान्क्वचित्क्रतुभिरिति । क्वचिद्धर्मंकूपारामालयादिभिरित्युक्तेश्च । यद्वास्वस्मिन्नात्म
निराजतइतिस्वराट् । ध्यायंतमेकमात्मानंपुरुषंप्रकृतेःपरमित्युक्तेः । यद्वास्वरत्यध्यापयतिवेदवेदांगानीतिस्वरोगुरुस्तमटातिसेवतइति

स्वराट्।शुश्रूषंतंगुरूनक्कापीत्युक्तेः।यद्वास्वान्पुत्रादीन्राजयतितत्तद्विवाहाद्विरागमादिभिरीतिस्वराट्।पुत्राणांदुहितॄणांचकालेविध्युपयाप
नम् ॥ दारैर्वरैस्तत्सदृशैरित्याद्युक्तेः । यद्वास्वेनरामेणराजतइतिस्वराट् । कुत्रापिसहरामेणचिन्तयंतंसतांशिवमित्युक्तेः । स्वरत्युप
तापयतिजीवानितिस्वरामृगया स्वृशब्दोपतापयोरिति । तयातद्धेतोरटतिगच्छतीतिवास्वराट् । चरंतंमृगयांक्कापि । घ्नंतंततःपशून्मे
ध्यानित्याद्युक्तेः । किंभूतःनारदःअभिज्ञः योगमायांजानानः । विदामयोगमायास्तइति । परमभक्त्येतिशेषः । भवत्पादनिषेवयेत्यु
क्तेः । यत्यस्मिन्स्वराजिसूरयोपियोगमायांवीक्ष्यमुह्यंति । वीक्षयोगेश्वरेशस्यमायांलोकाविसिास्मिरेइत्युक्तेः । पुनःकिंभूतःपरः
अविनिमयःतत्तद्गृहेएकरूपेणैवविराजमानः । नहिकृत्याकुलतयाकिंचिद्ग्लानिंप्राप्तइत्यर्थः । तंपरंसत्यंसर्वरूपं । सच्चत्यच्चाभवदितिश्रु
तेः । किंभूतंसतोनारदस्यआनिरस्तंकुहकंमानसखेदोयस्यसतं । पुत्रमाखिदेत्युक्तेः ॥ १०९ ॥ ४३ ॥ अथजरासंधवधतद्बद्धनृपानुग्र
हमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि तरत श्चाऽर्थे ष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥
तेजोऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना ऽस्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ११० ॥ ४४ ॥ ॥ अ
र्थेषुपुरुषार्थेषुधर्मार्थकाममोक्षेषुआद्यस्यधर्मस्यान्वयात्कुंत्यासंबंधात्यतोयस्ययुधिष्ठिरस्यजन्मासीत्तस्येतरतोऽमुत्रलोकेअयेशुभावहवि
धिनिमित्तंस्वराट्भीमार्जुनयुक्तःअभिज्ञःसर्वोपायज्ञःपरएवस्वेनधाम्नास्वतेजोंशभूतेनब्रह्महृदापरभक्तेनकपटधृतब्राह्मणरूपत्वाद्वेदपाठप
रेणवाभीमेनहेतुनातस्यजरासंधस्यमृदांमारणंतेने । जरासंधंघातयित्वाभीमसेनेनकेशवइत्युक्तेः । यत्रजरासंधेत्रिसर्गःबृहद्रथपत्न्याशक
लद्वयतयाबहिरुत्सृष्टस्यजराराक्षस्यासंधितस्यजरासंधनामकत्वात्त्रिभ्यःमातृद्वयात्पितृतश्चसर्गःसृष्टिर्जन्मामृषासत्यः । शकलद्वयात्मक
त्वात्त्रिधासर्गःमृषावा। किंचसूरयःनैनंनाथाभ्यसूयामइत्याद्युद्येःप्रकाशितपांडित्याःमुक्तबंधत्वात्परदर्शनकांक्षयाविनिमयोनिमेषरहिताः
॥ पिबन्तइवचक्षुर्भ्यामित्युक्तेः । यत्येराजानःआदिकवयेपरस्मैतंद्रष्टुंमुह्यंतिहर्षाद्विचित्ताजाताइत्यर्थः । सत्यंभवतोऽवश्यंमोचयिष्या
मीतिसत्यवचनंमाभैष्टदूतभद्रंवोघातयिष्यामिमागधमित्युक्तेः । सीदतीतिसद्गतःतेनसदाप्राप्तेनपरेणहेतुनातैराजभिरपिनिरस्तंकुहकंबं

दीभावदुःखंयास्मिंस्तद्यथातथातेजःअवारिवृतं । विरेजुर्मौचिताःक्लेशादित्युक्तेः । तंपरंधीमहि ॥ ११० ॥ ४४ ॥ अथशिशुपालव धलीलामाह । ॥ जन्मा ऽऽद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ऽब्रह्महृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजोऽवाऽरिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन स दा निरस्तकुहकं सत्यं परं धीमहि ॥ १११ ॥ ४९ ॥ ॥ आद्यस्य धर्मस्यान्वयात्संबंधात्यतोयस्ययुधिष्ठिरस्यजन्मासीत्तस्यार्थेषुराजसूयेऽग्रपूजाविधानादिषुइतरतःप्राप्तानंदःस्वराट्यादवपांडवसहितः अभिज्ञःसर्वज्ञःअजःपरःतस्यशिशुपालस्यअरिणाचक्रेणमृदामर्दनमरिमृदातांशिरश्छेदनमातेने।शिरःक्षुरांतचक्रेणजहारापततोरिपोरित्यु क्तेः । आदौपूर्वजन्मनिरावणाख्यजन्मनिकवयेवेदव्याख्यातृत्वेनविदुषेयद्वादौभगवत्पार्षदत्वेनसर्वज्ञायतयस्मैशिशुपालायतेसूरयःपंडि ताभीष्मादयःमृषाऽमर्षेणमुह्यंति।कर्णौपिधायनिर्जग्मुःशपंतश्चेदिपंरुषेत्युक्तेः । यत्रशिशुपालेत्रिसर्गःहिरण्यकशिपुरावणशिशुपालाख्य त्रिजन्मास्तियश्चाब्रह्महृत्परविमुखमनःदाःखंडकःसचैद्यःयथायथावत्धाम्नाशरीरेणविनिमयोविपरीतोभूतअसुरभावंपरित्यज्यपार्षदभावं प्राप्तः । चैद्यदेहोत्थितंज्योतिर्वासुदेवमुपाविशदित्युक्तेः । उपसमीपेऽविशत्पार्षदतामापेत्यर्थः । निरस्तंकुहकंयागोपद्रवोयेनतंपरंसत्यंअ सतोपिसत्यकरंधीमहि ॥ १११ ॥ ४९ ॥ दंतवक्रशाल्ववधलीलामाह ॥ ॥ जन्माद्यस्य यतोऽन्वऽयादितरतश्चाऽर्थेष्वऽभि ज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यं ति यत्सू रयः ॥ तेजोऽवारि मृदां यथा ऽविनि मयो यत्र त्रिसर्गोऽमृषा धाम्ना ऽस्वेनसदा ऽऽ निरस्तकुहकं सत्यं परं धीमहि ॥ ११२ ॥ ४६ ॥ ॥ जन्मनाद्यस्यपूर्वस्यपूर्वेषामपिपूर्वजाइत्युक्तेः चतुःसनावतारस्ययद्वा जातावैक्यंजन्माद्यानांसनकादीनांशापानुकुलतयेत्यर्थः अर्थेषुद्वारनिरोधात्तद्दत्तशापेषुसत्सुयःविजयनामाइतरतोभूतलमयात्दंतवक्रना माजज्ञेअनुतदनंतरंमुहिपरवैमुख्येसतिआदिकवयेपरस्मैतंहंतुअभिनिर्भयंयथास्यात्तथाअंतिनिकटेऽमृषाक्रोधेनस्वरेणाटतीतिस्वराट्तज नयाऽऽगतः । दिष्ट्यादिष्ट्याभवानद्यममदृष्टिपथंगतइत्युक्तेः । ज्ञःत्वंपातुलयोनःकृष्णेत्याद्युक्तेःसंबंधज्ञानवान्सदंतवक्रः यतोयस्मात् परस्मात् अव्ययत्वात्येनपरेणवाब्रह्मआतेनेवैकुंठप्राप्त्यामोचितइत्यर्थः । ततःसूक्ष्मतरंज्योतिःकृष्णमाविशदद्भुतमित्युक्तेः । किंचम

यस्तन्नामासुरः यत्सूर्यदुपादकः यस्यधाम्नोनिर्मातेत्यर्थः ॥ मयः परपुरंजयः ॥ पुरंनिर्मायशाल्वायेत्युक्तेः । अविनिरक्षणकर्त्त
रियत्रधाम्नितेजःज्योतिर्मयंअयोलोहमास्ति । प्रादात्सौभमयस्मयामित्युक्तेः ॥ तेनधाम्नासौभपुरेणात्रिषुलोकेषुसर्गःसंगोयस्यसःत्रैलोक्य
चारी । क्वचिद्भूमौक्वचिद्व्योम्निगिरिमूर्ध्निजलेक्वचिदित्युक्तेः । स्वेनभवंतीत्यस्वाःशत्रवःराक्षसाःअस्वेषुइनाःप्रभवस्तैःसहसीदतीतिस्वेन
सद्शाल्वइत्यर्थः।आनिरस्तंकुहकंमायावसुदेवादिदर्शनंयस्मिन्तद्यथातथामृदांमर्दनंगदयापुरभंजनानंतरंमारणमवारिवारितःप्रापितइत्य
र्थः। सत्यंतंपरंहृदाधीमहि॥११२॥४६॥अथबलदेवकृतसूतबल्वलवधलीलामाह॥जन्माद्यस्ययतो ऽन्वयादि तरतश्चा ऽर्थेष्व ऽभिज्ञः स्वरा
ट् तेने ऽब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः॥ ते जो वा ऽऽरि मृदां यथा विनिमयो यत्र त्रिसर्गों मृषा धाम्ना स्वेन सदा निरस्त
कुह कं सत्यं परं धीमहि ॥ ११३ ॥ ४७ ॥ ॥ यत्रसूतेत्रयाणांब्रह्मक्षत्रविट्संज्ञानांवर्णानांसर्गःनिश्चयोमृषा । तस्यात्रैवर्णिकत्वात् । ब्रा
ह्मण्यांक्षत्रियाज्जातःसूतइत्यभिधीयतइतिस्मृतेः। अस्यवासुदेवस्येदंआयम्नैमिषं। नैमिषेऽनिमिषक्षेत्रइत्युक्तेः। जन्मआदियेषांतानिज
न्मादीनिजन्ममृत्युजराव्याध्यादीनिअस्यंतिनाशयंतीतिजन्माद्यस्यानितीर्थानि । पुष्कराद्यानितीर्थानिगंगाद्यास्सरितस्तथा॥ नाशयं
तिनृणांजन्ममृत्युव्याधिभयंद्रुवादितिपुराणांतरात् । यंतीतिजन्माद्यस्ययन्तेनजन्माद्यस्ययताबलदेवेनयेन । तीर्थाभिषेकव्याजेनम
ध्यस्थःप्रययावित्युक्तेः । यथादिकवयेआदिकविं वेदंरक्षितुं । व्यासासनोपवेशाच्चशूद्रश्चांडालतांव्रजेदितिस्मृतिमूलकाश्रुतिरपिनहीनतः
परमभ्याददीतेत्येवंरूपेतिकस्मादसाविमान्विप्रानध्यास्तेप्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हतिदुर्मतिरित्युक्तेः । वध्यामेध
र्मध्वाजिनस्तेहिपातकिनोधिकाइत्युक्तेश्चमृदानाशमारि । तथाऽब्रह्महृत्ब्राह्मणद्वेषीइतरतोनीचोबल्वलदैत्यश्चमृदामारि । अर्थेषुऋषिय
ज्ञरक्षार्थंयद्यस्माद्बल्वलात्तेप्रसिद्धाःशौनकादयःसूरयोपिमुह्यंतियज्ञेसुरामांसादिवर्षणादाकुलाभवंति । किंभूताविनिमयः बल्वलस्यगग
नचरत्वात्तंप्रतिनिर्निमेषाःसंतःपश्यंतीतिभावः । केनस्वेननिजेनधाम्नाशस्त्रेणतेजोमयमुशलेनहलेनवा । तमाकृष्यहलाग्रेणबल्वलंगगने
चरम् । मुशलेनाहनत्क्रुद्धोमूर्ध्निब्रह्मद्रुहंबलइत्युक्तेः । यश्चाजोवस्तुतोजन्मापिनिरस्तकुदेवदेवक्षेत्रंनैमिषंपुनरन्वयात् । तत्रेतिशेषः । स्व

र्स्वर्गमासमंतादटत्यनेनेतिस्वराट्यज्ञकर्मतेनेस्वर्गकामोयजेतेतिश्रुतेः। तंपुनर्नैमिषंप्राप्तमृषयोयाजयन्मुदेत्युक्तेः। हप्रसिद्धंकंसुखरूपं
सत्यंब्रह्मज्ञानंतेनेयस्तंपरंबलरूपंवासुदेवंसदाधीमहि। ऋषिभ्यइतिशेषस्तेनइत्यस्यतत्रहेतुरभिज्ञःसर्वज्ञइत्यर्थः। तेभ्योऽविशुद्धंविज्ञानं
व्यतरद्भगवान्विभुरित्युक्तेःउइतिवितर्केवापादपूर्त्यर्थः ॥ ११३ ॥ ४७ ॥ अथसुदामब्राह्मणानुग्रहकुरुक्षेत्रयात्रागतभक्तानुग्रहलीलामा
ह ॥ ॥ जन्माद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽय आदिकवये मुह्यंति यत्सूरयः ॥ ते
जोऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ११४ ॥ ४८ ॥ ब्रह्महृदा
ब्रह्मण्यदेवेनपरेणअर्थेषुधनेषुतन्निमित्तमितरतोद्धारकांप्रतियःधनार्थंभार्याप्रेरणयायतआगच्छतःअभिज्ञः। अयंहिपरमोलाभउत्तमश्लो
कदर्शनमित्युक्तेः । तत्त्वविदस्तस्यजन्मनाद्यस्यब्राह्मणस्यार्थात्सुदाम्नःअन्वयात्पृथुकतण्डुलभक्षणरूपसम्बन्धात्स्वराट्स्वतःसिद्धः
अयःशुभावहविधिः परमैश्वर्यंतेने । किंचआदिःपरएवकविःस्तुतिकृद्यस्यतस्मैयत्यस्मैसुदाम्नेसूरयःसर्वज्ञाअन्तःपुरजनामुह्यंतिअन्तः
पुरजनोदृष्ट्वाकृष्णेनामलकीर्तिना । विस्मितोभूददतिप्रीत्याअवधूतंसभाजितमित्युक्तेः। किंचयत्रकालेमृदांतदधिष्ठात्र्यादेव्याःधाम्नाकां
त्याछाययातेजस्तन्मयंसूर्यमण्डलमवारिआवृतंसूर्योपरागःसंजातइत्यर्थः । भूच्छायायासूर्यमण्डलाच्छादनस्योपरागत्वंशास्त्रांतरप्रसि
द्धंअतएवत्रयाणांलोकानांसर्गः स्वरूपमपिविनिमयोविपरीतःमृषामिथ्यासीत्दिनएवनक्षत्राद्यवलोकनादितिभावः । सूर्योपरागःसुमहा
नासीत्कल्पक्षयेयथेत्युक्तेः। यद्वाऽविनिमयःस्वाभाविकोपित्रिसर्गःशत्रुमित्रोदासीनस्वभावःमृषापरदर्शनानंदेनात्मविस्मरणादितिभावः
यद्वापांडवयादवगोपालानांतदामींतनेषुभक्तेषुप्राधान्यात् । त्रिभिस्तैर्नियमितः सर्गःअविनिमयःपरस्परमिलनादिनाऽविपरीतस्वभा
वोभूदित्यर्थः।तत्रकालेस्वेनात्मनास्वस्वरूपदर्शनेननसतांभक्तानामामानिरस्तंकुहकंमनःकषायोयेनतंसत्यंसत्यपालकंपरंधीमहि ॥ ११४ ॥
॥४८॥ वसुदेवयागानुगतभक्तानुग्रहलीलामाह ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थे ष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदाऽऽय आदिक वये
मुह्यंति यत्सूरयः॥तेऽजो वाऽरिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्नास्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥११९ ४९॥आद्य

स्यपरस्ययतोजन्माभूत्तस्यस्वपितुर्वसुदेवस्यार्थेषुयागादिप्रयोजनेष्वभिज्ञः ब्रह्महृत्परमभक्तः वेदज्ञोवात्रिसर्गः राजर्षिदेवर्षिब्रह्मर्षिसृष्टिश्च
इतरतःकुरुक्षेत्रेआयवसुदेवायआदिकवयेपरंद्रष्टुंअन्वयात्येसूरयोभीष्मादयोपिअन्वयुःतेसर्वेविनिमयःनेत्रेषुविगतनिमिराजाःनिर्निमेषाः
सन्तःयथासुह्यंतितथास्वराट्स्वतःसुन्दरःअजःयत्यःपरएवयत्रकुरुक्षेत्रेअरिमृदामन्तःशत्रुजयिनांरिपुजेतॄणांराज्ञांवाऽमृषाऽसह्येनधाम्ना
श्रीविग्रहतेजसानिरस्तकुअलौकिकंकंसुखंआतेनेवितस्तारमहाभारतेमृतानांमोक्षोपलब्धेः । यमिहनिरीक्ष्यहतागताः स्वरूपंयेवामृधेस
मितिशालिनइत्यारभ्यबलभीमपार्थव्याजाह्वयेनहरिणानिलयंतदीयमितिदृष्ट्वाजिष्णोर्युधिरथयतंयच्चतत्साम्यमीयुरित्याद्युक्तिभिःश्रवणा
त् । स्वेनात्मनासत्यंहस्फुटंतंपरंसदाधीमहि ॥ ११९ ॥ ४९ ॥ षडर्भानयनलीलामाहः ॥ ॥ जन्मा ऽऽद्यस्य यतो
ऽन्वयादितरतश्चाऽर्थेष्व ऽभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवये मुह्यंति यत्सू रयः ॥ तेजो ऽवाऽरिमृदां यथाऽविनिमयो
यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदानिरस्तकुहकं सत्यं परं धीमहि ॥ ११६ ॥ ९० ॥ ॥ आद्यस्यपरस्ययतोदेवक्याहे
तोर्जन्मासीत् तस्याःसकाशात्येषांस्मरोद्गीथादीनांषण्णांमरीचिपुत्राणांसूर्जन्मयत्सूःतेषामर्थेषुमातृशोकापनोदतत्प्रत्यानयनतन्मोचना
दिषुअभिज्ञःस्वतःप्रवृत्तविज्ञानःस्वरेणध्वनिनाटतीतिस्वराट्बलदेवयुतोवातत्रधाम्निदेशेमुह्निनानाभोगवत्त्वेनमोहजनकेसुतलंस्वर्गिभिः
प्रार्थ्यमित्याद्युक्तेःअंतिबलेःसमीपेऽन्वयात् । यत्रधाम्नित्रिसर्गःतृतीयत्वस्यसर्गास्त्रिसर्गः । पृषोदरादित्वात्तृतीयत्वस्यत्र्यादेशः । तृ
तीयत्वनिश्चयोऽमृषासत्यः । सप्तसुपातालेषुसुतलस्यतृतीयत्वात् । गणनंतुप्रवेशक्रमेणैव । सुतलंसंविविशतुर्योगमायामुपाश्रिता
वित्युक्तेः । मृदांमर्दनशीलानांदैत्यानांधाम्नासुतलेनस्थानेनाविनिमयःवियुक्तोनभवतीत्यविनिमयःसंयुक्तस्तत्रतिष्ठन्नित्यर्थः । यःब
लिःवामनोवास्वेनवामनाभिधेनात्मावतारेणइतरतःप्राप्तसंतोषोभूत् । ब्रह्महृदाब्राह्मणनिष्ठमनसापरभक्तेनवाबलिनाआदिनाज्येष्ठभ्रा
तृबलदेवेनयुतःकविरादिकविस्तस्मैतथासाग्रजंपरमाराद्धुमयःपूजादिरूपंशुभकर्मतेनेकृतम्। ततःतेजःपरसम्भावनेनपौरुषश्चअवारिस्वी
कृतम् । ततश्चयथावत्मृतपुत्रदानेनसतोःपित्रोर्निरस्तंकुहकंध्वस्तमज्ञानंयेनतंपरंसत्यंधीमहि ॥ ११६ ॥ ९० ॥ सुभद्राहरणमैथिला

नुग्रहलीलामाह ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वऽयादि तरतश्चाऽर्थे ष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽऽय आदिकवये मुह्यंति यत्सू
रयः ॥ ते जो वारिमृदां यथा ऽवि निमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ११७ ॥ ९१ ॥ आ
द्यस्यपरस्यानुयतोयस्याःसुभद्रायाजन्माभून्नयासुभद्रायास्वराट्स्वेनैकाकिनात्मनैवराजमानःसंन्यासीअर्जुनःअर्थेषुस्वलावण्यभोगादिप्र
योजनेषुइतरतःप्राप्तानुरागोभूत्वाब्रह्महृदासंन्यासित्वाद्वेदपाठपरेणपराकूतविदावातेनार्जुनेनअभिज्ञःस्वानुरागविदःपरस्माततमनुज्ञाप्य
यत्यासुभद्राअयातदेवयात्रायांबहिर्गमनात्साआयेप्राप्ता। अयगतौकर्मणिलिट् । किंचसूरयोबलदेवादयोपिआदिकवयेपरस्मैमुह्यंतित
त्त्वेसुभद्राहरणानुज्ञानादिविषयेमोहिताभवंतीत्यर्थः । किंचयत्रब्राह्मणोत्रिसर्गःशौक्रसावित्रदैक्षरूपंजन्मत्रयममृषासत्यम् क्षत्रियादिज
न्मत्रयंयत्रमृषावाब्राह्मणजन्मेत्यर्थः। वारिमृदांजलसुरभिमृत्तिकानाम् । उपलक्षणमिदंफलादीनां। ददातीतिदाःदाता । फलार्हणोशीर
शिवामृतांभसामृदासुराभ्यांतुलसीकुशांबुजैः ॥ आराधयामासेत्युक्तेः । अजतिप्रत्युद्गच्छतीत्यजःसप्रकरणात्श्रुतदेवनामाब्राह्मणःकर्मते
प्रसिद्धानिमयःमान्यत्वात्कुटुम्बापेक्षयावाबहुत्वं। पुनीहीदंनिमेःकुलमित्युक्तेः । निमिवंशजोबहुलाश्वनामाराजायथाशब्दइवार्थेसइवनिर
स्तंसन्मार्गप्रदर्शनात् । ध्वस्तंकुहकंव्यामोहोयस्मिंस्तद्यथातथाआविप्रीतःकृतः । उषित्वादिश्यसन्मार्गमित्युक्तेः । यद्वातेजांसिधूपदी
पादीनिआपाघ्यार्दयःआरीव्यजनपवनःमृत्पदेनभौमंफलाद्यन्नजातंएतदादीनांदाताइतिव्याख्येयंगन्धमाल्यांबराकल्पधूपदीपार्घगोवृषै
रित्युक्तेः । स्वेननिजेनधाम्नाविग्रहेणसत्यंबहुलाश्वश्रुतदेवयोःसमकालमृषिभिःसहामंत्रणेद्विधाराजमानमपिसत्यस्वरूपं । निमंत्रेयेतांदा
शार्हमातिथ्येनसहद्विजैः ॥ मैथिलःश्रुतदेवश्चयुगपदित्याद्युक्तेः । उभयोराविशद्गेहमित्युक्तेश्च तंपरंधीमहि । इनिपातःप्रसिद्धौ ॥ ११७॥
॥ ९१ ॥ अथवेदस्तुत्यौपयिकंसिद्धांतमाह ॥ ॥ जन्मा ऽऽद्यऽस्य यतोऽन्वऽयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय
आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारिमृदां यथा ऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि
॥ ११८ ॥ ९२ ॥ ॥ अविनिमयःअव्यतिक्रमःहृदाबुद्धयासहितःत्रयाणामिंद्रियमनःप्राणानांसर्गःसृष्टिःआद्वासुदेवात्यतःपरस्मातज

न्मप्रादुर्भावमप्राप्सीत् बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुरित्युक्तेः । किमर्थंअभिज्ञःक्षेत्रज्ञस्यजीवास्यार्थेषुमात्रार्थंचआत्मनेकल्पना
यचेत्युक्तेषुप्रयोजनेषुतन्निमित्तं । यद्वार्थेषुधर्मार्थकाममोक्षार्थं । अत्रस्वामिमतं । तत्रजीवानांबुद्ध्युपाधिर्मात्रार्थांविषयभोगार्थंसृष्टःएतेना
र्थवर्गस्यासिद्धिःसूचिता । इन्द्रियवर्गोपाधिर्भवार्थंजन्मप्रभृतिकर्मकरणार्थंसृष्टः । एतेनधर्मवर्गस्यासिद्धिःसूचिता । तथामनउपाधिरात्मा
र्थंलोकांतरगमनागमनरूपभोगार्थंसृष्टःएतेनकामवर्गस्यासिद्धिःसूचिता।प्राणवर्गोपाधिश्वप्राणायामद्वाराऽकल्पनार्थंसृष्टःएतेनमोक्षसिद्धिः
सूचिता । एतमर्थंस्पष्टतयाविशिनष्टि । यस्यत्रिसर्गस्यांतिनिकटेआयआगतस्तदीयविषयेष्वासक्तःस्वतःस्वस्माद्राजतइतिस्वराट् ।
ममैवांशोजीवलोकेजीवभूतइत्युक्तेः । तवपुरुषंवदंत्यखिलशक्तिभृतोंशकृतमितिवक्ष्यमाणत्वात् । स्वांशतापन्नोजीवःमुहिमोहनिमित्तंआ
देर्भगवतःकंसुखंतस्यवयेविस्तारेचमोक्षनिमित्तश्चतेनेकल्पितइत्यर्थः । अर्थधर्मकामेषुमोहःमोक्षेपरमसुखमितितात्पर्यं । यद्यस्मात्परस्मा
त्तेजोवारिमृदांपूर्ववदर्थः । उपलक्षणमाकाशस्यपञ्चभूतानां । सूरयःउत्पत्तिप्रवाहश्चयत्राधिकरणेधाम्नाप्रभावेणामृषाप्रवाहरूपेणनित्यः ।
अबुद्धतंविद्रुमदण्डमण्डितमित्यादिवदिवशब्दोऽध्याहार्यइति । एवंब्रह्मवेदःयथायथार्थत्वेनान्वयात्अन्वयंप्राप । रातेर्दातुःपरायणं । त
मेवविदित्वातिमृत्युमेति । यतोवाइमानिभूतानिजायंतेइत्यादिवेदायंतादृशस्वरूपंप्रतिपादयंति । किंचस्वेनसच्चिदानन्दरूपेणइतरतः
प्रपंचाद्भिन्नोयःसदानिरस्तंकुहकंमायाविक्षेपोयेनतंसत्यंबाधितप्रपंचाधिष्ठानंपरंधीमहि ॥ ११८ ॥ ९२ ॥ अथवेदस्तुतिपद्यानामर्थां
स्तात्पर्यद्वाराह ॥ ॥ जन्माऽऽद्यस्य यतोऽऽन्वयादि तरतश्चाऽर्थेष्व ऽभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति
यत्सूरयः ॥ तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ११९ ॥ ९३ ॥
यतइतिवाच्यत्वात्अतःकारणात्तंपरंहृदाधीमहि । अत्रश्रुतीनांकर्तृत्वाद्वयंध्यायेमेत्यर्थः । अत्रप्रेक्षावत्प्रवृत्तेःप्रयोजनवत्त्वात्प्रयोजनम
पेक्षणीयंतच्चमायानिरासएवसचभगवदनुग्रहादेवसोपितद्ध्यानवशाल्लभ्यतइतिध्यानस्यरूपादिचिंतनात्मकतयाभक्त्यंगभूतस्मरणस्व
रूपत्वंपर्यवसन्नम् । एतेनचनृषुतवमाययाभ्रममित्यादौत्वयिसुधियोदधातिभावमित्यादेःस्वकृतपुरेषुइत्यादौभवतउपासतेंऽघ्रिमभवमि

त्यादेरर्थोध्वनितः । किंचहृदेत्युपन्यासात् । अतऋषयोदधुस्त्वयिमनोवचनाचरितमित्यादेः । दधातिसकृन्मनस्त्वयियआत्मानिनित्य
सुखइत्यादेरर्थोवृत्तार्थः । तदेवंहृदार्धीमहिइतिपरभक्तिप्रार्थनयातदनुग्रन्हामायानिरासःकांक्षितइतिसूचितम् । एतेन । जयजयजह्य
जामाजितेत्यादेरर्थःसमन्वितः । किंचपरमितिविशेषनिर्देशात्सर्वोत्कर्षवृत्तिर्लब्धा । ततश्चत्वमसियदात्मनासमवरुद्धभगइतिअगजग
दोकसामखिलशक्त्यवबोधकइत्यस्यार्थः ॥ महसिमहीयसेष्टगुणितेपारिमेयभगइत्यादेश्चार्थःसंगमितः । तदेवंपरत्वेसिद्धेधीमहीतिध्याना
द्यात्मकभक्तिलभ्यत्वादभक्तदुर्ज्ञेयत्वमापादीति । तेनचक्कचिदजयात्मनाचचरतोनुचरेन्निगमइत्यर्थःप्रसक्तः । अत्रोपक्रमोपसंहारयोरैक्य
रूप्यत्वात्श्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाइत्यंतवाक्यस्यसाक्षादनभिधेयतयावेदैरतन्निरसनद्वाराप्रतिपाद्यतेइत्यर्थोध्वनि
तः॥ कुतःध्यायध्वंयतोयस्मात्कारणात्सत्यंवास्तवसत्तायाःपरमास्पदीभूतं । एतेनसतइदमुत्थितमित्यादेःपुरुषविधोन्वयइत्यादौसदसतः
परंत्वमथयदेष्ववशेषमृतमित्यादेःबृहदुपलब्धमेतदवयंत्यवशेषतयेत्यादेःसदिवमनइत्यादेःनयदिदमग्रआसेत्यादेश्चतदध्यस्तत्वेनाधिष्ठान
गुणस्याधिष्ठेयेप्रतीयमानस्वाभाव्याज्जगतःप्रातीतिकसत्तावैशिष्ट्यंस्वस्यापिवास्तवसत्ताश्रयत्वमित्येवंरूपोर्थःसूचितः ॥ पुनःकीदृशंस्वे
नस्वतःसिद्धेनधाम्नाश्रीविग्रहरूपेणवासदानिरस्तंकुहकंमायाविलासोयेनतं। एतेनइतितवसूरयइत्यादौकिमुतपुनःस्वधामविधुताशयकाल
गुणाइत्यादेःस्वकृतइत्यादौअथवितथास्वमूष्ववितथंतवधामसममित्यादेःततउदगादनंततवधामशिरइत्यादेः नयदिदमग्रआसेत्यादेरर्थोंत
र्भूतः । किंचयइतरतोमायादिभिरन्वयमततीत्यन्वयात्प्राप्तसंबंधःअतएवतेजोवारिमृदांपूर्ववदर्थःपञ्चभूतानामर्थेषुतन्मयेषुब्रह्मांडेषुवस्तु
षुआदिकारणंब्रह्मसअस्यविश्वस्यजन्मतेनेजन्मपदंपालनसंहारोपलक्षणम् । ततश्चयएवमायामहदंहकारादिप्रवर्त्तकःसर्वजगतांकर्त्ताब्रह्मा
दिसर्वांतर्यामीसर्वाग्रवर्तीव्यापकइत्याद्यर्थाःप्रत्यायिताः। तेनस्थिरचरजातयःस्युरजयेत्यादेःमहदहमादयोंडमसृजन्नित्यादेःबृहदुपलब्धमि
त्यादेःकइहनुवेदबतावरजन्मलयोग्रसरंयतउदगादृषिरित्यादेःनघटतउद्भवःप्रकृतिपूरुषयोरजयोरुभययुजाभवंत्यसुभृतइत्यादेः स्वकृतवि
चित्रयोनिषुविशन्नित्यादेःस्वकृतपुरेष्वमीष्वबहिरंतरित्यादेःतर्हिनसन्नचासदित्यादेःत्वयितइत्यादेःतवबलिमुद्वहंतिसमदंत्यजयानिमिषा

इत्यादेरर्थाः संपन्नाः। किञ्चयश्चाभिज्ञः शास्त्रयोनित्वात्। एतेननकिमपिशास्त्रमवक्ष्यशयीतयदेत्यादौसृष्टिकालेआक्षेपलब्धः शास्त्रप्रवर्त्तक
त्वरूपोर्थःक्रोडीकृतः । अतएवस्वराट्स्वतःसिद्धराजमानभावःसचासमानमाधुर्यैश्वर्यादिकत्वमसमोर्ध्वगुणगणकत्वंचएतेनत्वमकरणःस्व
राडित्यादेःत्वमुतजहासितामित्यादेःद्युपतयएवतेनययुरंतामित्यादेःविदधतियत्रयइत्यादेःतवयद्भ्रुकुटीत्यादेरर्थाःप्रपंचिताः। एषुऐश्वर्यवत्त्वं
निभृतमरुदित्यादौस्त्रियअगेंद्रेत्यादेरर्थःपर्यवसन्नः। अत्रमाधुर्यवत्त्वंत्वदवगमीत्यादौअनुयुगमन्वहंसगुणेत्यादेःइतितवसूरयइत्यादौआखिल
लोकमलक्षपणकथामृताब्धिमित्यादौदुरवगमेत्यादौचरितमहामृताब्धिपरिवर्तेत्यादेरर्थाःप्रकटीकृताः। अत्रासमानोर्ध्वगुणलीलादिवत्त्वं।
किंचयश्चपरआदिकवयेआदिकारणभूतंस्वरूपात्मकंयत्कंसुखंतस्यवयेविस्तारनिमित्तम्। एतस्यैवानंदस्यैवान्येमात्रामुपजीवंतीतिश्रुतेः।
स्वरूपानंदस्यादित्वंवानास्तिविनिमयोयस्यसःअव्यतिक्रांतरूपोस्तीतिशेषः। एतेनयोब्रह्मानंदोत्कृष्टस्वरूपतयामायातीतइत्यर्थः। एते
नदुरवगमेत्यादौनपरिलषंतिकेचिदपवर्गमपीत्यादेःत्वदवगमीनवेतिभवदुत्थशुभाशुभयोरित्यादेः। इतितवेत्यादौपरमभजंतियेपदमजस्रसु
खानुभवमित्यादेरर्थाःसंक्षिप्ताः। किञ्चयदित्यव्ययंपञ्चम्यर्थे । यंपरित्यज्यसूरयःउत्पत्तिप्रवाहःसंसारिणामितिशेषः। एतेनत्वदनुपथमित्या
दौयदनुशयाभ्रमंतीत्यादेःविजितहृषीकेत्यादेःस्वजनसुतेत्यादेःदृतयइवश्वसंतीत्यादौनवतरमंत्यहोऽसदुपासनयात्महनइत्यादेः । परिवय
सेपशूनिवेत्यादेःभ्रमयतिभारतीत्यादेःतवयद्भ्रुकुटीत्यादेःसयदजयात्वमजामनुशयीतेत्यादेःयदिनसमुद्धरंतीत्यादेरर्थाःप्रतिपादिताः। यद्वाय
द्यस्माद्धेतोःयदनुग्रहादित्यर्थः । यंप्राप्यज्ञात्वावासूःजंतूनांजन्मअयःशुभावहविधिरूपिणीभवतिसफलीभवतीत्यर्थः । एतेनइतितवसू
रयइत्यादेःश्वसंत्यसुभृतोयदितेनुविधाइत्यादेःइतिनृगतिंविविच्येत्यादेःत्वदनुपथंकुलायमित्यादेर्निभृतमरुदित्यादेःत्वयिकृतसौहृदाइत्या
देःतवपरियेचरंतीत्यादेःभुविपुरुपुण्येत्यादेःत्वदवगमीत्यादेरर्थाःप्रदर्शिताः । अमुहिमोहराहितेयत्रपरास्मिन्नंतिसान्निकर्षेत्रिसर्गःत्रिगुण
प्रपञ्चोमृषानास्ति । जनिमसतइत्यादेरनुमितमंतरात्वयिविभातिमृषेत्यादेरर्थाःसम्पन्नाः । किंवात्रिसर्गोब्रह्मांडमसृषाविद्यतइत्यर्थः ।
एतेनयदंतरांडनिचयाननुसावरणाइत्यादेरर्थाःस्फुटीकृताः। अन्येषांपद्यतदेकदेशानामर्थायथासम्भवंतत्रतत्रांतर्भावनीयाइतिविस्तरभि

योपरम्यते ॥ ११९ ॥ ९३ ॥ वृकासुरवधलीलामाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादितरत श्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्र
ह्म हृदा य आदिकवये मुह्यंति यत् सूरयः ॥ तेजोवारि मृदां यथाविनि मयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं
परं धीमहि ॥ १२० ॥ ९४ ॥ आद्यस्यब्रह्मणोयतोयस्यनारदस्यजन्मततोभिज्ञःवृकोनामासुरःपुत्रःशकुनेःपथिनारदमित्याद्युक्तेर्ज्ञाता
र्थःआदिकवयेमहादेवंप्रसादयितुंवृकोब्रह्मतपस्तेनेइतरतःइतरान्हित्वेतिशेषः। अर्थेषुगौरीहरणाद्यर्थंचपुनःनिरस्तकुहकंसरलस्वभावंमहा
देवमन्वयात्। स्वहस्तंधातुमारेभेगौरीहरणलालसइत्युक्तेः। यःस्वराट्विष्णुर्यद्यस्यवृकस्यस्वेनधाम्नाप्रभावेणमृदांमारणंतेने । किंभूतोवृ
कःअविनिरक्षाधिकारिणिविष्णौमयःसंगवान् । मत्वर्थीयोच् । शाकुनेयभवान्व्यक्तंश्रांतःकिंदूरमागतइतितत्संगतविष्णूक्तेः। यत्राविनि
विष्णौनिमित्तेसतिसूरयोपिमुह्यंतिकिमुततादृशाइतिभावः । तेजोवारिमरीचिकाजलंयथामृषातथायत्रत्रयाणांदैत्यदानवरक्षसांसर्गोनिश्च
यस्तत्पराजयादिरूपोमृषाविष्णुर्जयतिनासुराइत्युक्तेःतंसत्यंसतःशिवस्यरक्षकंपरंधीमहि ॥ १२० ॥ ९४ ॥ अथत्रिदेवपरीक्षणलीलामाह॥
॥ जन्मा द्यस्य यतो ऽन्वयादितरतश्चा ऽर्थे ष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽऽय आदिकवये मुह्यंति यत् सूरयः ॥ तेजो वारि मृदां
यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२१ ॥ ९९ ॥ ॥ यःस्वराट्क्षत्रादिनिरपेक्ष
त्वेनराजमानोब्राह्मणोऽर्थाद्भृगुरितरतःसरस्वतीतटापेक्षयाब्रह्मलोककैलासवैकुण्ठेषुअर्थेषुत्रिषुदेवेषुमहत्त्वपरीक्षार्थमन्वयात्। त्रिष्वधीशेषु
कोमहान् ॥ तस्यजिज्ञासयातेवैभृगुंब्रह्मसुतंनृप ॥ तज्ज्ञस्यैप्रेषयामासुरित्याद्युक्तेः। सचाभिज्ञःसन्यत्रत्रिसर्गःत्रिविधाकृतयस्तस्यराक्षसा
असुराःसुराःगुणिन्यामाययासृष्टाइत्युक्तेःत्रिगुणकृतःसर्गोमृषामायिकएवनसन्निरितितस्यब्रह्ममहत्त्वंतेनेविष्णुमहत्त्वमवर्णयत्। भूयांसंश्रद्दधु
र्विष्णुंयतःशांतिर्यतोभयमित्युक्तेः। केभ्योमहत्त्वंतेनेआदिकवयइत्येकत्वंसामान्याभिप्रायं।आदिकविभ्यऋषिभ्यइत्यर्थः। पुनश्चसत्रमा
वज्यमुनीनांब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेणराजन्भृगुरवर्णयादित्युक्तेः । यद्यत्रभगवतिसूरयोभृगुप्रभृतयोपिमुह्यंतिमोहंविनापादताड
नासंभवात्। यतोयेनभगवताजन्माद्यस्यब्राह्मणस्यमृदापादताडनेनतेजःश्रीलक्ष्मीरूपंसदासर्वदाअवारि । अद्याहंभगवँल्लक्ष्म्याआसमे

कांतभाजनमितितदुक्तेः । यश्चाविनिमयःक्ततेपिपादताडनेनेनिर्विकारएव । आहतेस्वागतंब्रह्मन्निषीदात्रासनेक्षणमित्याद्युक्तेः । आंप्रसिद्धं
यथायथावत्स्वेननिजेनधाम्नाप्रभावेणनिरस्तंकुहकंलोकसंशयात्मकंकोदेवोमहानित्येवंरूपंविषादोयेनसतं । पुनःसत्यंसतांप्राप्यंतंपरंहृ
दाधीमहि ॥ १२१ ॥ ९५ ॥ अथब्राह्मणबालकानयनलीलामाह ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट्
तेने ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥ तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषाधाम्ना स्वेन सदानिरस्तकुहकं
सत्यं परं धीमहि ॥ १२२ ॥ ९६ ॥ ॥ यतःयस्यार्जुनस्यआदिपूर्वंजन्मआद्यस्यनारायणस्यानुअनन्तरमभूत्यःपूर्वजन्मनिनारायणा
नुजत्वान्नरइत्यर्थः । तस्यार्जुनस्यार्थेषुब्राह्मणपुत्ररक्षाप्रतिज्ञाभंगादग्निप्रवेशनिवृत्त्यर्थं अर्थोभिधेयरैद्रव्यप्रयोजननिवृत्तिष्वित्यमरः । अभि
ज्ञःयत्रब्राह्मणात्मजाजातमात्रादेहंत्यक्त्वायांतितज्जानान्नित्यर्थः । स्वराट्निरपेक्षैश्वर्यःस्वेनार्जुनेनसहितोवात्रिसर्गःत्रिलोकक्त्यतयःपरः
ब्रह्माणिब्राह्मणपुत्राणिहरतिप्रत्यानयतिमहाकालपुरादितिब्रह्महृतत्तथाभूतंतेजऐश्वर्यंतेने। इतरतोमहाकालवैकुण्ठंचायात् । कवयेसुखवि
स्तारकेआयेसमीपमागतेयत्रपरस्मिन्मृदांमृन्मयस्यपार्थिवब्रह्मांडस्यवारिगर्भोदकेस्थितेनधाम्नामहाकालवैकुंठाख्यस्थानेनोपलक्षिताः
अमृषासत्याःसूरयःसर्ववेदप्रवर्त्तकाविनिमयोदेवाःश्रीनारायणइत्यर्थः । पार्षदापेक्षयापूज्यत्वाद्वाबहुत्वमत्र । यथातत्त्वेनमुह्यंतिआनन्दव
शादितिभावः । द्विजात्मजामेयुवयोर्दिदृक्षुणेत्याद्युक्तेर्दिदृक्षावत्त्वेनतत्पूरणादानंदइतिभावः । स्वेनात्मनासत्यंसतःस्वभक्ताद्विजस्यमृत
पुत्रादानादानिरस्तंकुहकंदुःखंयेनतंपरंधीमहि ॥ १२२ ॥ ९६ ॥ इतिदशमस्कन्धार्थदिग्दर्शनम् ॥ १० ॥ अथैकादशस्कन्धार्थदिग्द
र्शनमाह ॥ तत्रमुशलोत्पादनलीलामाह ॥ ॥ जन्माऽऽद्यऽस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाऽय आदि
कवये मुह्यंति यत्सूरयः ॥ तेजो ऽवारि मृदां ऽयथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥
॥ १२३ ॥ ९७ ॥ यतोऽभिज्ञःसर्वज्ञात्आत्वासुदेवात्परस्मात्यस्यसांबस्यजन्मासीत्तस्मात्अन्वयंवंशमत्तीतिअन्वयात्कुलहरंतत्अ
योलोहंतन्मुशलंतथासीत् । दहशुस्तस्मिन्मुशलंखल्वयस्मयमित्युक्तेः । सूरयःसर्वज्ञाविश्वामित्रादयोब्राह्मणाःपरस्यहृदाइच्छया

थार्थेषुस्त्रीवेशितासागर्भात् । किंजनिष्यतीतिप्रश्नादिषुअमृषाक्रोधेनमुह्यंति । किंतुभगवदिच्छानुरूपंशेपुरित्यर्थः । कोपितामुन
यःशेपुर्भगवन्मतकोविदाइत्युक्तेः । किंचस्वराड्ज्ञातिराजउग्रसेनोयदुपतिश्यत्अयोलोहमुशलंवारिसमुद्रजलेतेनेचिक्षेपच्चूर्णयित्वेतिशे
षःतच्चूर्णयित्वामुशलंयदुराजःसआहुकः॥ समुद्रसलिलेप्रास्यादित्युक्तेः । आदिअकारादिकंअकंदुःखंतस्यवयोविस्तारोयस्मात्तस्मिन्यत्रा
यसिमुशलेएरकारूपेणसमुद्रतीरेसतिविद्यमानेतेप्रसिद्धाःयादवाःमृदापरस्परमेरकाप्रहारैर्मर्दनेनविनिमयोदेवाअभवन् । देवान्यदून्नावि
धायादौभूयोदेवान्विधायतामितिस्वाम्युक्तेः । एवंयतोऽयसोमुशलात्त्रिसर्गःत्रिलोकक्तत्अजःपरश्चइतरतःप्राप्तसंतोषोभूत् । कालरू
प्यन्वमोदतेत्युक्तेः । स्वेनधाम्नाप्रभावेणसतांदेवानांयदूनांवानिरस्तंनाशितव्यामोहंअंवासुदेवंतंपरंधीमहि ॥ १२३ ॥ ९७ ॥ वसुदे
वनारदसंवादमाह ॥ ॥ जन्मा ऽऽद्यस्य यतोन्वयादितरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदा ऽऽय आदिकवये मुह्यंति
यत्सूरयः ॥ तेजोवारिमृदां यथावि निमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ १२४ ॥ ९८ ॥
॥ ॥ आद्यस्यपरस्ययतोवसुदेवात्जन्मासीत्तस्यार्थेषुतत्पृष्टतत्त्वकथनानिमित्तंअभिज्ञःपरस्यान्वयात्संबंधात्इतरतःप्राप्तानंदःस्वरा
ट्स्वतःशोभमानः । अवासीन्नारदोभीक्ष्णंकृष्णोपासनलालसइत्युक्तेः । ब्रह्मणोहृत्परस्यमनोरूपःपरचिंतनपरोवानारदःतत्किमपि
आतेनेअवददित्यर्थः । यत्तत्वंतेसूरयःपंडितानिमयोनिमिवंश्याजनकइत्यर्थः । पूज्यत्वाद्बहुत्वं । आदिःप्रथमश्चासौकविश्चेतिआदिक
विस्तस्मैनवयोगेश्वरज्येष्ठभ्रातरंकविंप्रष्टुं । उपलक्षणंहर्यादीनां । यद्वादौकविर्यस्यनवकस्यसआदिकविस्तस्मैतथा । कविर्हरिरंतरि
क्षःप्रवृद्धःपिप्पलायनः ॥ आविर्होत्रोथद्रुमिलश्चमसः करभाजनइत्युक्तेः । कवेर्ज्येष्ठत्वं । मुह्यंतिसंदिग्धाभवंति । संदेहंविनाप्रश्ना
संभवात् । अतआत्यंतिकक्षेमंपृच्छामोभवतोनघाइत्युक्तेः । यत्रयस्मिस्तत्त्वेआयेप्राप्तेसतिसाधौजीवेतेजोवारिमृदांतेजोबन्नानांतेजोबन्न
मयंकायमित्युक्तेस्तन्मयशरीरस्यत्रिसर्गःआध्यात्मिकादितापत्रयसृष्टिश्चयथातत्त्वेनमृषामिथ्यास्यात्देहादौयदात्मज्ञानंततत्त्वज्ञानान्निव
र्ततइत्यर्थः । ज्ञातेतत्त्वेकःसंसारइतिभगवत्पूज्यपादोक्तेः । स्वेनधाम्नास्वरूपेणआविसंतोषकंअवेःप्रीणनार्थत्वमपि निरस्तकुअभौमंकं

सुखंभवतिहस्फुटंमुच्यतइत्यर्थः । अंवासुदेवंसदातंपरंधीमहि ॥ १२४ ॥ २ ॥ अथस्वधामगंतुमुत्सुकमुद्धवप्रार्थनमाह॥ ॥जन्माऽऽद्यस्य
यतो ऽन्वयादि तरत श्चार्थेऽष्वऽभिज्ञः स्वराट् तेनेब्रह्महृदाऽऽय आदिकवये मुह्यंति यत् सूरयः ॥ तेजोवारि मृदां यथा विनिमयो यत्र
त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२५ ॥ ३ ॥ ॥ यतोयस्योद्धवस्यआद्यस्यपरस्यान्वयाद्वंशा
ज्जन्मसइतरतएकांतदेशेआदिकवयेसनातनसुखविस्तारवतिवैकुंठेतन्निमित्तंसत्यं । सत्यःसत्यपराक्रमइत्युक्तेः । हरिंआयेप्राप । आम
भावोत्रार्षः । विविक्तउपसंगम्यजगतामीश्वरेश्वरमित्यारभ्यस्वधामनयमामपीत्यंतोक्तेः । किंभूतःस्वरेणसंबुद्धिशब्देनाटतीतिस्वराट् ।
देवदेवेशयोगेशपुण्यश्रवणकीर्त्तनेतितत्कृतसंबुद्धेः । अर्थेषुसर्ववेदार्थेष्वभिज्ञःयःपरःतस्माउद्धवाययथाययथोक्तंनिरस्तकुहकंशुद्धंब्रह्मज्ञानं
तेनेतंपरंधीमहिसदासर्वदाहृदाचेतसा । किंभूतंतेजांसिवारयतीतितेजोवारि वैकुंठं । नतद्भाजयतेसूर्योनशशांकोनपावकइत्युक्तेः । य
द्भ्राजमानंस्वरुचैवसर्वतइत्युक्तेश्चयांतमितिशेषः।केनहेतुनास्वेनधाम्ना । हेतौतृतीया।यत्रत्रिसर्गोरजआदिसर्गोमृषायथामृदांविनिमयःक्री
डनकादि यद्वातेजोवारिमृदांसंबंधिनंलोकंत्यजंतमितिशेषः । लोकंसंत्यक्ष्यतेभवानित्युक्तेः । यत्रवैकुंठेऽविनिमयोवयोवर्णादीनांविपर्या
सोनभवतीत्यर्थः । नोनिमियोलेढिहेतिरित्युक्तेः । कालकृतवैकृत्याभावस्तत्रास्तीतिभावः । त्रिसर्गश्चक्लेशमोहसाध्वससंबंधःयत्रमृषा ।
व्यपेतसंक्लेशविमोहसाध्वसमित्युक्तेःयद्यस्मिनब्रह्मणिसूरयोपिकपिलाद्यामुह्यंति । तैस्तदस्वीकारादिति ॥ १२५ ॥ ३ ॥ अथयदुदत्ता
त्रेयसंवादमाह ॥ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदि कवये मुह्यंति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेनसदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२६ ॥ ४ ॥ ॥ स्वरा
ट्स्ववंशप्रवर्तकःयदुराजःयतोयस्यजन्माद्यस्यात्रेयाविप्रस्यान्वयात्सेवनात्अर्थेषुसर्वपदार्थेषुइतरतस्त्यक्तसंगोभूत् । अवधूतवचःश्रुत्वा
पूर्वेषांनस्सपूर्वजः ॥ सर्वसंगविनिर्मुक्तइत्युक्तेः । सचाभिज्ञोब्राह्मणःकवयोविदुषेयदवेवारिमृदांधाम्नायत्सत्यंआदिब्रह्मतेने । मुह्यंतितत्त्वो
पदेशेनशिष्याज्ञानमितिमृदोगुरवः। कर्त्तरिक्विप्मृदमर्दनेधातोः।वारयश्चतुर्विंशतिश्चतेमृदोवारिमृदस्तेषांकेरलमतपाद्याःपञ्चेत्युक्तेर्वाशब्द

श्वतुस्संख्यापरः यादयोष्टावित्युक्तेःरिशब्दोद्वित्वसंख्यापरःअंकानांवामतोगतिरित्युक्तेश्ववारिशब्देनतुचतुर्विंशतिसंख्यासंपत्तिर्जायतेधी
यंतेधार्यंतइतिधाःदधातेःकर्मणिक्विप् । म्नायतेऽभ्यस्यतइतिम्नाःअभ्यासःधानांधारणानांम्नाअभ्यासोधाम्नाःतेनधाम्ना । आतोलोपः
चतुर्विंशतिगुरुलब्धधारणाभ्यासेनज्ञानंददावितिभावः । यत्राभिन्नेऽत्रेःसर्गोऽत्रिसर्गोऽत्रिपुत्रत्वममृषासत्यमस्ति। भावप्रधानोनिर्देशः ।
अत्रेःपत्न्यनसूयात्रीन्जज्ञेसुयशसःसुतान् । दत्तंदुर्वाससंसोममित्युक्तेः । अत्रालोपस्त्वार्षः । पुनःमुह्यत्यनयेतिमुहीमायातस्याअ
न्तोऽदर्शनमस्यास्तीतिमुह्यंति। ज्ञानेनचतदज्ञानंयेषांनाशितमात्मनइतिश्रीमुखोक्तेः । किंचयत्सूरयःयद्वंशप्रवाहःविनिमयःययातिश
प्तत्वेनराज्यसगरहितोपिस्वेनसदापरभक्त्यायथान्यइतिशेषःअन्योऽशप्तोयथातथानिरस्तानांदेवानामपिकुहकंविस्मापकंतेजोराज्यमा
येउग्रसेनादिषुदृष्टत्वात् । तत्परंधीमहिहृदामनसेति ॥ १२६ ॥ ४ ॥ अथमतांतरनिरासपूर्वकमुद्धवोपदेशमाह ॥ ॥ जन्मा
द्यस्य यतोऽन्वयादि तरतश्चार्थेष्वभिज्ञःस्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥ तेजोवारि मृदां यथा
विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकु ह कं सत्यं परं धीमहि ॥ १२७ ॥ ९ ॥ ॥ यःस्वराट्स्व
तएवराजमानःपरःश्रीकृष्णःआदिकवयेबृहस्पतिशिष्यायोद्धवायआदेर्बृहस्पतेःसकाशात्कविःप्राप्तविद्यस्तस्मै । बृहस्पतेःप्राप्तनय
मित्युक्तेः । हृदाप्रीत्याब्रह्मज्ञानंइतरतोभक्तियोगंयोगंचतेने । यद्यस्मिन्ज्ञानयोगादौतेजोवारिमृदांसूरयोमुह्यंतिअन्यथात्वेनजानंती
त्यर्थः । तेजःशब्दोपलक्षिताग्निसाध्यकर्मावबोधकपूर्वमीमांसावारिशब्दोपलक्षितजलसंकल्पसाध्यदानबोधकधर्मशास्त्रंमर्दयातितर्कबले
नवादिनइतिमृत्तर्कशास्त्रंतेषांमध्येयेसूरयःमीमांसकादयःउपलक्षणमेतत्सांख्यपातंजलादीनाम् । अथैषांकर्मकर्तॄणांभोक्तॄणांसुखदुःख
योः । नानात्वमथनित्यत्वंलोककालागमात्मनामित्याद्युक्तेः।नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंतीत्यादिश्रुतेश्च । यद्वा
यज्ज्ञानंसूरयःसनकादयः अभितोज्ञापयतिनियोजयतिस्वेस्वेकर्मणिलोकानित्यभिज्ञोब्रह्माच । ज्ञानियोगेधातोर्डः । कस्यजलस्यविः
पक्षीकविर्हंसः । हंसकारंडवाकीर्णमितिजलवर्णनोक्तेः।आदिःसनातनश्वासौकविरित्यादिकविःपरएवतस्माआदिकवयेपप्रच्छुरितिशेषः

तस्याहंहंसरूपेणसकाशमगमंतदेत्युक्तेः । ब्रह्माणमग्रतःकृत्वापप्रच्छुरित्याद्युक्तेश्च । यत्रप्रश्नेसतित्रिसर्गस्त्रिगुणसम्बन्धोहृदाचेतसास
हयः सविनिमयोविगतसंगोभूत् । गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रभो । कथमन्योन्यसन्त्यागइत्याकारकप्रश्नोदत्तोत्तरोभूत् । जीवस्यदे
हउभयंगुणाश्चेतोमदात्मनइत्यारभ्यमद्रूपउभयंत्यजेदित्यन्तोक्तेः । किंचतेजोवारिमृदामित्यस्याप्यन्योर्थश्च तत्तदेवावगच्छत्वंममते
जोंशसंभवमितिश्रीमुखोक्तेस्तेजःशब्दोदितंविभूतियोगंवारयतिमोक्षमितिवारिः सिद्धव्यूहोमयासंपद्यमानस्यकालक्षणहेतवइत्युक्तेर्वा
रिशब्दोदितंसिद्धिव्यूहंमृद्नातिपापंजालमितिमृदा । यथोदितवर्णाश्रमक्रियातेजोवारिभ्यांसहितामृदातेजोवारिमृदातांचतेनेचात्सत्सं
गमहत्वादिकंचतेने । ब्रह्मज्ञानंतुसुतस्यविषयालोकइत्यादिनाबद्धोमुक्तइतिव्याख्येत्यादिनाचभक्तियोगंचाज्ञायैवंगुणान्दोषान्मांभजे
तेत्यादिना । सत्संगमहत्वंच नरोधयतिमांयोगइत्यारभ्यसंगाच्छतसहस्रइत्याद्यंतेन । योगंच समआसनआसीनइत्यादिना ।
सिद्धिव्यूहंतुजितेंद्रियस्ययुक्तस्यजितश्वासस्ययोगिनः ॥ मयिधारयतश्चेतउपतिष्ठंतिसिद्धयइत्यादिनाविभूतियोगंचअहमात्मोद्धवामी
षामित्यादिना । वर्णाश्रमधर्मंतुधर्म्यएषतवप्रश्नइत्यारभ्याध्यायद्वयेनतेनेइतिप्रघट्टकार्थः । किमर्थंतेनेजन्मआद्यंयस्यतस्यलोकस्यअ
र्थेषुलोकान्निजज्ञानंग्राहयितुंअस्माल्लोकादुपरतेमाथिज्ञानंमदाश्रयम् । अर्हत्युद्धवइत्यारभ्यातोमद्वयुनंलोकंग्राहयन्निहातिष्ठत्वित्यंतोक्तेः
यतःपरस्यान्वयात्ध्यानादिसम्बन्धात् यथायथावत्हस्फुटंनिरस्तंकुकुत्सनंयत्रतान्निरस्तकुसर्वतःश्लाघ्यंकंसुखंभवतितंसत्यंपरंधीमहि ।
यानिर्वृतिस्तनुभृतांतवपादपद्मध्यानादित्याद्युक्तेः । सत्यत्वेहेतुमाह । यश्चस्वेननिजेनधाम्नातेजसासदाऽमृषाविद्यमानःअहमादिश्चमध्यं
चभूतानामंतएवचेत्युक्तेः । इहहृदेत्यादेरुभयथान्वयः ॥ १२७ ॥ ९ ॥ अथभिक्षुगीताद्यर्थमाह ॥ ॥ जन्मा ऽऽद्यस्य यतो ऽन्वयादि
तरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सू रयः॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना
स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२८ ॥ ६ ॥ ॥ यतोयस्याद्यस्यब्राह्मणस्यान्वयाद्वंशाज्जन्मसआवंत्योद्विजःआदिक

१ कषायपक्तिःकर्माणीत्युक्तेः ।

वयेआदिकविंश्रीहरिंप्रसादयितुंअर्थेषुधनेषुगतेषुसत्सुइतिशेषः । इतरतःविरक्तःसन्ब्रह्मतत्प्राप्तिसाधनंसंन्यासंतेने । अवंतिषुद्विजः कश्चिदित्यारभ्यअर्थोप्यगच्छन्निधनमित्याद्युक्तेः । सचाहेदमहोकष्टंवृथात्मामेनुतापितइत्याद्युक्तेश्च ॥ नूनंमेभगवांस्तुष्टोयेननीतोदशामि मामित्याद्युक्तेः । शांतोभिक्षुरभून्मुनिरित्यंतोक्तेश्च । यश्चाभिज्ञःज्ञाततत्वःसन्नयंपरंसत्यमायेतंधीमहीतिसम्बंधः । यथातेजोवारिमृदांवि निमयोविकाररूपंब्रह्मांडमासीत् । आसीज्ज्ञानमथोअर्थएकएवाविकल्पितइत्यारभ्यांडमुत्पादयामासुरित्यंतोक्तेः । त्रिसर्गश्चयथासीत् गुणानामसमिश्राणामित्यारभ्याध्यायांतोक्तेः । स्वेनधाम्नापरमानन्दप्राप्त्यायथाचस्वराट्परमात्मरूपोभवति । तिष्ठंतमासीनमुतव्रजंत मात्मानमात्मस्थमतिर्नवेदेत्याद्युक्तेः । एतत्सर्वन्निरस्तकुहकंनिःसंदेहमादिकवयउद्धवाययःपरस्तेनेतंसदाहृदाधीमहीतियद्यस्मिन्परेसूर योसात्वतामृषभंसर्वभूतावासममंसतेत्याद्युक्तेःमृषामुह्यंतितस्यसर्वात्मत्वात् । कृष्णमेनमवेहित्वामात्मानमखिलात्मनामित्युक्तेः ॥१२८॥ ॥ ६ ॥ अथोद्धवोपदेशानन्तरमप्राकव्यलीलामाह ॥ ॥ जन्मा ऽऽद्य ऽस्य यतो ऽन्वयादि ऽतरतश्चा ऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदायआदिकवयेमु ह्यं ति यत् सूरयः ॥ तेजो वारि मृदां यथा ऽविनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १२९ ॥ ७ ॥ ॥ यतोयस्योद्धवस्याद्यस्यपरस्यान्वयात्सेवनात्जन्मसफलमासीत् ।सफलमितिशेषः । तज्जन्मतानि कर्माणितदायुस्तन्मनोवचः । सेव्यतेयेनविश्वात्मेत्युक्तेः । यश्चार्थेषुपरसंबंधिस्रगलंकारवस्त्रादिषुइतरतःप्राप्तानंदः । त्वयोपभुक्तस्रग्गंधे त्यादेः । अभिज्ञःबृहस्पतिशिष्यत्वाद्विद्वान् । नोद्धवोण्वपिमन्न्यूनइत्युक्तेःपरतुल्यश्च । कवयेपंडितायतस्मैउद्धवायअमुहिमोहाभावनि मित्तंअंतिनिकटएवयत्रयेपरेणआदिकारणंतेजस्तन्मयंब्रह्मब्रह्मतत्त्वंतथातेनेग्राहितमित्यर्थः । अप्युद्धवत्वयाब्रह्मसखेसमुपधारितम् ॥ अ पितेविगतोमोहइत्याद्युक्तेः । यथाऽविनिमयःप्रारब्धक्रमप्राप्तःअविपरीतःत्रिसर्गःत्रिगुणस्वभावःमृदांशरीराणांसूरयउत्पत्तिप्रवाहश्चमृषा मिथ्यास्यात्तत्तत्त्वश्रोतृणामित्यर्थः । किंचवारिसमुद्रजलेपिसदानित्यंस्थितेनधाम्नाद्वारावतीनगरेणस्वेनात्मनास्वरूपेणनिरस्तकुहकं ध्वस्तमायाविलासं । द्वारकांहरिणात्यक्तांसमुद्रोप्लावयत्क्षणादित्युक्तेः । सत्यंसत्यलीलं । नित्यंसान्निहितस्तत्रेत्यादेः । तंपरंहृदाधाम

हि ॥ १२९ ॥ ७ ॥ इतिभगवल्लीलाकल्पद्रुमएकादशस्कन्धार्थदिग्दर्शनम् ॥ ११ ॥ अथद्वादशस्कन्धेऽधर्महेतुकलिशांत्यर्थंनामब्रह्मप्रकाशनप्रसं गंकल्क्यवतारद्वारासत्ययुगादिप्रवर्त्तनलीलांचाह ॥ जन्मा ऽऽद्यस्य यतोऽन्वयादितरतश्चा ऽर्थेष्वऽभि ज्ञः स्वराट् तेने ब्रह्महृदा य आदि कवये मुह्यंति यत् सूरयः ॥ तेजो वा ऽरिमृदां यथा विनिमयो यत्र त्रिसर्गोमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १३० ॥ ॥ १ ॥ यत्रवक्ष्यमाणेकलौसूरयश्च । अप्यर्थेचशब्दः ॥ पंडिताआपियेऽरिमृदोराजानःकिमुतसूरयःअविनिमयोयथाराक्षसास्तथामुह्यंतिअविवे किनोभवंति । राजानश्चप्रजाभक्षाभविष्यंतिकलौयुगइत्याद्युक्तेःतेषामरिमृदांसूर्यचंद्रवंशोत्पन्नानामन्वयात्वंशात्तेजःपौरुषंआद्यस्यानु ष्ठीयमानधर्मस्यजन्मप्रकाशश्चइतरतोऽधर्मेणआदिभक्षितं । यस्मिन्कलावधर्मोराज्ञामुपलक्षणतयावर्णाश्रमाणांमहिमानंस्वधर्माचरणं चानाशयादित्यर्थः । अव्रताबटवश्शैवभिक्षवश्चकुटुंबिनः ॥ वनस्थिनोग्रामवासान्यासिनोह्यर्थलोलुपाइत्युक्तेः । व्रात्याद्विजाभविष्यंति क्षत्रियायुद्धकातराः । शूद्राःप्रतिग्रहीष्यंतिकिराताःकूटकारिणः ॥ म्लेच्छप्रायाश्चभूभृतइत्याद्युक्तेः । त्रिभिःकृतत्रेताद्वापरैःसर्गःसंबंधोय स्यसात्रिसर्गःयत्रयःकलिःकवयेधीरायतंमोहितुंयथामृषा ॥ मिथ्याभवति । कलिनाधीरभीरुणेत्युक्तेः । तथातत्रकलौअर्थेषुपुरुषार्थेषुतान्निमि त्तंज्ञःसर्वज्ञस्ययतोयस्थपरस्यस्वरेणकण्ठस्वरेणाव्यक्तउच्चार्य्यतइतिस्वराट्कण्ठस्वरमनुगतमुच्चार्यंब्रह्मनामब्रह्मेत्यर्थः । अभिभियोभावंते नेमोक्षदमासीदित्यर्थः । किंचनामापराधरहितमेवनामब्रह्मयथोक्तफलदंनान्यथेतिभावःतदेवविशिनष्टि किंभूतंब्रह्मस्वेननिजेनधाम्नाप्रभा वेणनिरस्तकुहकंध्वस्तनामापराधमित्यर्थः । तदुक्तंभक्तिरसामृतासिंधौ । सर्वापराधकृदपिमुच्यतेहरिसंश्रयःहरेरप्यपराधान्यःकुर्याद्द्विपद पांशुलः ॥ नामाश्रयःकदाचित्स्यात्तरत्येवसनामतः ॥ नाम्नोपिसर्वसुहृदोह्यपराधीपतत्यधइति । नामापराधास्तु सन्निंदा ऽसतिनामवै भवकथाश्रीशेशयोर्भेदधीरश्रद्धा श्रुतिशास्त्रदैशिकागिरां नाम्न्यर्थवादोभ्रमः ॥ नामास्तीतिनिषिद्धवृत्तिविहितत्यागौ चधर्मांतरैःसाम्यंना म्निचशंकरस्यचहरेर्नामापराधादशेतियद्वास्वेनधाम्नाकल्किनावतारेणआनिरस्तंकुहकंपापकर्मानुष्ठानंयेनतं । यदावतीर्णोभगवान्कल्किध र्मपतिर्हरिः ॥ कृतंभविष्यतितदाप्रजासूतिश्चसात्विकीत्युक्तेः । सत्यंसत्यवत्कृतयुगप्रवर्त्तकंतंपरंसदाहृदाधीमहि ॥ १३० ॥ १ ॥ अथ

परीक्षिन्मोक्षसर्पहोमादिप्रसंगमाह ॥ ॥ जन्माद्यऽस्य यतो ऽन्वऽयादितरतश्चाऽर्थेष्वऽभि ज्ञः स्वराट् तेने ब्रह्म हृदाऽऽय आदिकवये ऽमुह्यंऽति यत्सू रयः ॥ तेजो वारिमृदांऽऽ यथा ऽविनि मयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकु ह क स त्यं परं धीमहि॥ १३०॥ ॥ २ ॥ ॥ आदेःपरस्यकवयेतद्गुणवर्णनकर्त्रे श्रीशुकायअयःशरणंगतःअतएवअस्यपरस्यार्थेषुतत्त्वेषुअमुहिश्रीभागवतश्रवणान्मोहाभावेसंदेहाभावेसतीत्यर्थः । इतरतःप्राप्तानन्दःज्ञःविद्वान्स्वराट्महाराजःपरीक्षित्मृषाधाम्नाकपटाद्विजवेशेन । ब्रह्मवेशप्रातिच्छन्नःकामरूपोदशच्नपमित्युक्तेः । अंतिनिकटेसतिविद्यमानेहृदायेउरगेतक्षकेयथाअभि । अव्ययीभावत्वात्तृतीयार्थत्वम् । भियोऽभावेन । भगवंस्तक्षकादिभ्योनमृत्युभ्योबिभेम्यहमित्युक्तेः । जन्मार्त्तिंसहरतीतिजन्मादि । इत्रजादिभ्यश्चेतीत्र् । संसारहरंनिरस्तकुअभौमंकंसुखरूपंतद्ब्रह्मपरमेवतथाऽयात्परतत्त्वज्ञानेनसर्पदंशादेर्नाबिभेदित्यर्थः । प्रविष्टोब्रह्मनिर्वाणमभयंदर्शितंत्वयेत्युक्तेः । अनुतदनुपरीक्षिद्ब्रह्मलाभानन्तरंयस्मात्स्वराजःपरीक्षितःसूरुत्पातिर्यस्यसयत्सूःजनमेजयःअरिमृट्पितृशत्रुसंहारकंतेजोग्निंतेनेहोमार्थंसर्पसत्रेऽग्निमाहितवानित्यर्थः । जनमेजयःस्वपितरंश्रुत्वातक्षकभक्षितम् ॥ यथाजुहावसंक्रुद्धोनागान्सत्रेसहद्विजैरित्युक्तेः । यतःयत्नवान्स्वेनात्मनाऽविनिसर्वजगत्पालकेयत्रपरस्मिन्त्रिसर्गस्त्रैलोक्यंसदानित्यंमयःसंगतोस्तिहस्फुटम् । विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदितिश्रीमुखोक्तेः । आंस्मृतौतमंवासुदेवंपरंधीमहि ॥ १३० ॥ २ ॥ ॥ अथवेदव्यसनपुराणप्रवर्त्तनसूर्यस्वरूपप्रकाशनप्रसंगान्मार्कंडेयप्रलयदर्शनलीलांचाह ॥ ॥ जन्माद्यस्य यतो ऽन्व ऽयाऽदि तरत श्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने ब्रह्महृदाय आदि कवये मु ह्यंति यत् सूरयः ॥ तेजो वारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना ऽस्वेन स दाऽऽनिरस्तकुहकं सत्यं परं धीमहि ॥ १३१ ॥ ॥ ३ ॥ ॥ यःपरःकवयेतस्मैश्रीव्यासायआदिपूर्वसिद्धंब्रह्मवेदानित्यर्थः । यथाहृदातेनेयत्प्रेरितोव्यासोवेदव्यसनंचकारेत्यर्थः । हृदिस्थाच्युतनोदिताः ॥ अवतीर्णोमहाभागवेदंचक्रेचतुर्विधम् ॥ ऋगथर्वयजुःसाम्नांराशीनुद्धृत्यवर्गशः ॥ चतस्रसंहिताश्चक्रेमंत्रैरित्याद्युक्तेः । ननुतस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरइत्यादिश्रुतेःवेदःसकर्तृकःवाक्यत्वाद्भारतादिवदित्यनुमानाच्चवेदस्यसकर्तृकत्वा

वगमात्कथमादित्वंतत्राह । तस्माद्यज्ञादित्यादिश्रुतिस्तुतस्याविर्भावपरा जनीप्रादुर्भावइतिधातोर्ज्ञज्ञिरइतिलिटिरूपम् । अनुमानं तुदृष्टांतविकलम् । वस्तुतोभारतादीनामप्यनादित्वमेवतद्व्याख्यातमस्माभिरस्यैवव्याख्याशतके अनादिनिधनानित्यावागुत्सृष्टास्व यंभुवा ॥ आदौवेदमयीदिव्येतिस्मृतेः । शिवाद्याऋषिपर्यंताःस्मर्तारोस्यनकर्तृकाइतिस्मृतेश्च । वाचाविरूपनित्ययेतिश्रुतेश्च । किंचअस्यमहतोभूतस्यनिःश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदइत्यादिश्रुतेर्निश्श्वासितरूपत्वादपिकर्तृवर्जितएववेदः । नहिपुरुषे णनिःश्वासःक्रियते । किंतुस्वतःसिद्धएवसचलतियथातथावेदोपिस्वतःसिद्धएव । वेदोनारायणःसाक्षात्स्वयंभूरितिवक्ष्यमाणत्वाच्चे त्यलंपल्लवितेन ।यतःयोव्यासस्तथार्थेषुअर्थवादप्रधानेषुपुराणेषुअभिज्ञआसीत्। एतावतावेदानामत्रैवर्णिकग्राह्यत्वाभावास्त्रीशूद्रांत्यजादि बोधार्थंवेदान्संगृह्यपुराणानिप्रावर्तयदित्यर्थः । किंचस्वरंतरिक्षमाटतीतिस्वराट्तेजःतन्मयःधाम्नास्वरूपेणस्वेषुआत्मरूपेषुइनेषुद्वादश मासानुगतसूर्येषुसीदातिविसरतिप्रकाशतइतिस्वेनसद्॥यद्वास्वएवात्मैवेनःप्रभुर्येषांतिस्वेनाःऋषिगंधर्वाप्सरोयज्ञरक्षोनागरूपास्तैःसहसी दतिगच्छतीतिस्वेनसत् । द्वादशस्वपिमासेषुदेवोसौषड्भिरस्यवै ॥ चरन्नित्याद्युक्तेः। एतेनद्वादशादित्यरूपप्रकाशःकथितः । यदा दित्यगतंतेजोममतेजस्तदर्जुनेत्युक्तेः । यश्चपुरुषेयश्चासावादित्यइत्यादिश्रुतेः । अतएवसूरेषुसूर्येषुयातिप्राप्नोतीतिसूरयः । याते ईः । ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टइत्यादिस्मृतेश्चद्वादशादित्यरूपीपरएव । तत्रवारिप्रलयजले तरतःप्लवतःजन्माद्यस्यब्राह्मणस्यमार्कंडेयस्यमुहिमोहेसतिअंतितत्क्षणमेवानुपश्चात्अयादिशुभावहविधिप्रभृतितेने । यद्वासूरंयाति सेवतइतिसूरयःशिवाः । यस्योदयास्तसमयेसुरमुकुटनिर्घृष्टचरणकमलोपिकुरुतेंजालिंत्रिनेत्रःसजयतिधाम्नांनिधिःसूर्यइत्युक्तेःशिवःसन् । तस्मैपुराणाचार्यताकल्पजीविताभेदभक्तित्रैकालिकज्ञानविरागविज्ञानरूपमयादितेने । कामस्तेयंमहर्षेस्तुभक्तिर्मास्त्वमधोक्षजे ॥ ब्रह्मवर्चस्विनोभूयात्पुराणाचार्यतास्तुते । ज्ञानंत्रैकालिकंब्रह्मन्विज्ञानंचविरक्तिमत् ॥ आकल्पांताद्यशःपुण्यमजरामरतातथेत्युक्तेः यत्रवारित्रिसर्गःस्वर्गमर्त्यपातालसर्गःमृषामिथ्यासीत् । त्रैलोक्यमासीत्सहदिग्भिराप्लुतमित्युक्तेः । मृदांभूमेर्वानिमयोवैपरित्यंदाहक्लेदा

दिनास्वरूपवैपरीत्यंचविशेषतोभूदिति । आनिरस्तकुहकंबाधितमायाप्रपंचंतंपरंसत्यंधीमहि । सलिलंलोकसंप्लवः । तिरोधायिक्षणा
दस्येत्युक्तेः । १३१ ॥ ३ ॥ अथशास्त्रसमाप्तौशास्त्राचार्यंव्यासंप्रणमति ॥ ॥ जन्मा ऽऽद्यस्य यतोऽन्वयादितरतश्चाऽर्थेष्व ऽभिज्ञः
स्वराट् तेने ब्रह्म हृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ तेजो ऽवाऽरिमृदां यथाऽविनिमयो यत्र त्रिसर्गो ऽमृषा धाम्ना स्वेन
सदानिरस्तकुहकं सत्यं परं धीमहि ॥ १३२ ॥ ४ ॥ ॥ यतोयस्यव्यासस्यतेजोवारिकालिंदीप्रवाहेआद्यस्यवर्णेष्वाद्यस्यपरा
शरमुनेरन्वयात्संबंधात्इतरतइतरस्यांदासकन्यायांसत्यवत्यामुपरिचरवसोर्वीर्यान्मत्सीभूताद्रिकाप्सरोजातायांजन्माभूत् । अर्थेषुवेदवि
भागाद्यर्थेयश्चाभिज्ञःसर्वज्ञात्पितुःतद्ब्रह्मवेदमायेप्रापयस्मिन्सूरयोमुह्यंति । आदिकवयेपूर्वजन्मन्यपिविदुषेश्रीशिवाच्छास्त्रंश्रुतवतेशुका
यस्वेनासाधारण्येनराजतइतिस्वराट्श्रीभागवतंतेने । यःस्वानुभावमित्युक्तेः । हृदाप्रीत्या । मह्यंपुत्रायशांतायपरंगुह्यमिदंजगावि
तितदुक्तेः । यत्रव्यासेत्रिसर्गोमृषाविप्रादुदासकन्याजातत्वेनतस्याद्विसर्गत्वात् । यत्रचमृदांमृच्छब्दोपलक्षितपंचभूतकार्यस्यदेहस्या
र्थात्ब्राह्मणत्वस्याविनिमयोविपर्यासाभात्रएवदासकन्यायांजातोपिब्राह्मणएववीर्यप्राधान्यात् । निरूपितंचैतद्द्वारतेगरुडकृतनिषादभ
क्षणोपाख्याने । तंसत्यंपिपर्त्तिपाल्यातिपूरयातिवेतिसत्यंपरम् । खोत्रप्रत्ययःखित्त्वात्पूर्वपदस्यमुम् । सत्यधर्मप्रवर्तकंस्वेननिजेनधा
म्नाप्रभावेणसतांपांडवानामानिरस्तंकुहकंवनवासेमंत्रोपदेशादिनादुःखंयेनतंधीमहि ॥ मानंचात्रभारतीयवाक्यंविस्तरभियानलिखित
म् ॥ १३२ ॥ ४ ॥ एतच्छास्त्रप्रवर्त्तकंश्रीशुकदेवंप्रणमति ॥ ॥ जन्माऽऽद्यस्य यतो ऽन्वयादितरतश्चाऽर्थेष्वऽभिज्ञः स्वराट् तेने
ब्रह्महृदा ऽऽय आदिकवये मुह्यंति यत्सूरयः ॥ ते जो ऽवारि मृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं
सत्यं परं धीमहि ॥ १३३ ॥ ५ ॥ ॥ यतोयस्यशुकस्यआद्यस्याद्यावतारभूतस्यव्यासस्यसकाशात्जन्माविर्भावोभूत्तंधीमहीति
संबंधः । अरणिंमथ्नतोव्यासस्यवीर्यमरण्यांपपातततःश्रीशुकोजातः । साक्षात्पितुर्द्वैपायनस्यमइत्यत्रायमर्थःस्वामिचरणैरुपपादितः
। सचकवयेविदुषेपरीक्षिन्नृपतयेआदिपूर्वंसिद्धमेवब्रह्मतद्रूपंश्रीमद्भागवतंतेनेददौश्रावयामासेतियावत् । इतिहासपुराणानांभागोयोवाच

कस्यसः॥ कर्तृवर्जितएवास्यव्यासःप्राकव्यक्तन्मतः॥ मार्कंडेयादिसंज्ञातुकाठकादिवदिष्यतामितिसिद्धांतदर्पणोक्तेरादित्वमेव पुराणंब्रह्म
संमितंवेदतुल्यमित्यर्थः । यद्वाएतस्यमहताभूतस्यानिःश्वसितमेतद्य दृग्वेदोयजुर्वेदःसामवेदोऽथर्वांगिरसइतिहासःपुराणंविद्याउपनिषद
इत्यादिबृहदारण्यकश्रुतेरादिसिद्धत्वमेवपुराणानामपि । किमर्थंतेनेअर्थेषुपरीक्षिन्मोक्षान्यजनाभीष्टसिद्ध्यर्थम् । इतरतःसूतोपियद्यं
स्मातअन्वयातप्राप । तत्रकीर्त्तयतोविप्राविप्रर्षेर्भूरितेजसः ॥ अहंचाध्यगमंतत्रनिविष्टोभूरितेजसइत्युक्तेः । यद्यस्मिन्श्रीभागवतेसू
रयोप्यापाततोऽधीतशास्त्राअपिमुह्यंतिअतिविशदहृदयाधिगम्यत्वेनतस्योपाख्यानेषुकुतर्काकुलचित्ताभवंति । भक्त्याभागवतंशास्त्र
नव्युत्पत्त्यानटीकयाः॥ गृहिण्यैवगृहंप्रोक्तंनपुंश्चाल्यानवेश्ययेत्यभियुक्तोक्तेर्भक्तिशून्यत्वाद्वामुह्यंति । किंचयेनस्वराट्परीक्षितअभिज्ञःसन्
तेजोज्योतिःस्वरूपंब्रह्मअवारियथामृदांविनिमयोघटशरावादिमृषा।तथायत्रशुकदेवेत्रिसर्गोमृषा ।स्वसुखनिभृतचेताइत्युक्तेः । त्रिसर्गःप्रपं
चप्रतीतिः। किंभूतंस्वेनधाम्नानिजानंदप्राध्यापरंसर्वतउत्कृष्टंभगवद्रूपमित्यर्थः । ज्ञानीत्वात्मैवमेमतइतिश्रीमुखोक्तेः।पुनःसतांजीवानामा
निरस्तंकुहकंपापंयेनतं । तमखिलवृजिनघ्नव्याससूनुमित्युक्तेः।पुनःसत्यंसंतःप्रियाअस्येतिसत्यस्तंनित्यंविष्णुजनप्रियइत्युक्तेः । अत्रस
च्छब्दात्प्रियेर्थेण्यः। सर्वेष्वर्थेषुसर्वेतद्धितप्रत्ययाभवंतीतितेचवैकल्पिकणित्त्ववंतइतिवैयाकरणाराद्धांतः । इहव्याख्यानेयत्रक्वचनसारस्व
तसूत्राणामपिलेखनात्तेष्वनार्षदृष्टिंकृत्वायदिकश्चनव्याख्यानादृतचेताभवेत्।कलौतदेवशंसंतिऋषिभिर्भाषितंतुयदितिस्मृतेः।आर्षवाक्यं
सदाश्राव्यंनत्वनार्षंकदाचन॥ऋषिप्रणीतमार्षंस्यादनार्षंतद्यदन्यथा॥अनार्षश्रुतिपाठाभ्यांप्रत्यवायीभवेन्नरइति । येषांवेदेकथाप्रोक्ता
सार्वज्ञ्यंसर्वशक्तिता ॥ विप्रास्तऋषयःप्रोक्ताभवंत्यनुयुगंसदा । विश्वामित्रवसिष्ठाद्याअनंताःश्रुतिधारिणइतिसंहितोक्तेः । सचेत्थंबोधनी
यः । तथाहिऋषिषुपाणिन्यादिष्वपिग्रन्थप्रणयनसामर्थ्यंसरस्वतीप्रसादावाप्तमेव । सरस्वतीचवाल्मीकइतिहरिवंशोक्तेः॥वाल्मीकग्रहणं
तत्रान्येषांसर्वेषामुपलक्षणंकाकदधिरक्षणन्यायेन।यत्क्तंसर्वेषांशास्त्रज्ञानंसाचसर्वगुरुरेवसर्वगुरुत्वाच्चतस्याःपरमार्षत्वमस्ति।विद्यावाप्तये
गुरुरेवार्थ्यते।साचबृहस्पतिप्रभृतिभिःप्रार्थितः।सरस्वतींनमस्यामीत्यारभ्य सामेवसतुजिह्वाग्रेब्रह्मरूपासरस्वतीत्यंतग्रंथेनस्कान्दे।ब्रह्मरू

पाब्राह्मणरूपेत्यर्थः। ब्रह्मब्राह्मणआत्मनेतिश्रुतेः। ब्राह्मणरूपत्वंतस्याब्राह्मणचिह्नानांपुस्तकाक्षसूत्रादीनांधारणादेवावसीयते। वामेह
स्तेचदिव्यांबरकनकमयंपुस्तकमित्युक्तेर्दक्षिणेचाक्षसूत्रमित्युक्तेश्च। यत्तत्रस्त्रीरूपत्वंतत्प्रातीतिकमेवनवस्तुतः। पुंस्त्वंनास्तिशंभुविधि
कृष्णेकलययथाजलमधिमृगतृष्णे। स्त्रीत्वंनास्तितथैवभवान्यांकमलायांचतथैवचवाण्यामितिरघूत्तमतीर्थकृताद्वैतानंदोक्तेः। स्त्रीपुंमलानु
षंगादिनेश्वरेस्तिकदाचनेत्यन्यत्रोक्तेश्च। परमेश्वरीत्वंच याब्रह्माच्युतशंकरप्रभृतिभिर्देवैःसदावन्दितासामांपातुसरस्वतीतिसनत्कुमारसं
तोक्तेः।वेदेऽप्यस्याःकथास्ति।तस्याःसमुद्राअधिविक्षरंतितेनजीवंतिप्रदिशश्चतस्रः॥ततःक्षरत्यक्षरंतद्विश्वमुपजीवतीत्यादिश्रुतेः। तस्या
वाचःसकाशात्समुद्रामेघानद्यश्चसमुद्भवतिजलमस्मादितिव्युत्पत्तेःअधिअधिकंप्रभूतमुदकंविक्षरंतिवाग्देवतारूपेणांतर्यामिणाप्रेरितामेघा
दयोजलक्षरणादिकुर्वंतिअक्षरंप्रधानंतदधिष्ठितंसत्क्षरतिईक्षणादिघटाद्यन्तकार्याकारेणपरिणमते। अत्रतस्याइतितेनेतिस्त्रीपुंनिर्देशेना
स्यामायामहेशोभयरूपत्वंपुंस्त्वादेस्तत्रानैयत्यश्चध्वनितामितिकिंबहुना। तत्रसंहितोक्तर्षिलक्षणस्यविद्यमानत्वादृषित्वमृषीणामपिध्ये
यत्वात्परमर्षित्वमित्यलंप्रसक्तानुप्रसक्तेन।किंच ननिंदेन्मनसावाचासर्वव्याधिपराङ्मुखइतिलोकेशकरशर्मणेश्वरोक्तिनिंदातःसर्वरोगावाप्ते
रुक्तत्वादपिसूत्रादिनिंदानोचितेति। अथास्यव्याख्यानस्यप्रयोजनमाह॥ समग्रपुराणश्रवणासमर्थानामेकस्यैवास्याद्यश्लोकस्यश्र
वणात्समग्रंपुराणंश्रुतंस्यात्तत्फलंचाविकलंस्यादित्येतत्प्रयोजनमिति॥ जन्माद्यस्येत्यादिपद्यंसर्वभागवतश्रुतेः॥ फलदंनात्रसंदेहःसर्वा
र्थस्यात्रसूचनात्॥ सूत्ररूपमिदंज्ञेयंपाठात्सर्वफलप्रदम्॥सर्वपाठासम्भवेतुचतुश्श्लोकींसदापठेत्॥तस्याप्यसम्भवेचैनंश्लोकंनित्यंपठे
त्सुधीः॥ श्रीकृष्णंमनसाध्यात्वासर्वपाठफलंलभेदितिकौशिकसंहितोक्तेः। भुवनपालनतत्परमानसागिरिवराज्जलपस्यदिशिस्थितम्॥
हरविलोचनयोजनभूमिकेरघुसुतस्यनृपस्यसरोवरम्॥ १॥ निखिलपापहरंस्नवनादिनातदुपकंठगतंशुभपत्तनम्॥ खरडनामकमस्ति
जनैर्युतंश्रुतिविधानपरायणमानसैः॥ तस्मिन्पुरेविप्रगणाग्रगण्यउवासविप्रोबलरामशर्मा॥तदात्मजोभूधरनामधेयःस्वाचारनिष्ठोखिल
शास्त्रवेत्ता॥ गौरीशपादांबुजदत्तचेतागौरीप्रसादस्तुततोबभूव॥ तत्सूनुरौदार्य्यगुणेनशोभीजातःसुकर्मासुखदेवशर्मा॥ तदात्मजोभूद्र

जरामशर्माकुलावतंसोखिलमानितश्च ॥ निक्कारामस्तस्यसूनुर्बभूवतस्माज्जातौद्वौसुतौलोकमान्यौ ॥ हेरंबस्यमाघमासश्चतुर्थ्यांगाथाये
नसंप्रणीतानुजःसः ॥ नाम्नालोकेयोहिरामप्रतापोभूत्वालोकंश्रीहरेःसंजगाम ॥ येनायंरचितोग्रंथःसज्ज्येष्ठोध्यापनेरतः ॥ नाभिकंजपुरा
धीशहरिसद्मनिनित्यशः ॥ श्रीमद्भागवतींगाथांकरोतिकृष्णवल्लभाम्॥श्रीवंशीधरशर्मास्तिगौडःकौशिकगोत्रजः॥ किंच॥श्रीवृन्दावनचंद्र
स्यराधिकायाःपतेर्मया॥प्रीत्यर्थंचकृतंग्रंथंशृणोतुराधिकापतिः॥श्रीभागवतलीलानांप्रादेशःकथितोत्रवै॥विद्वज्जनसुमोदायनिजप्रीत्यैतथा
मया ॥ कृपयाकंजनेत्रस्यनीलपर्वतवासिनः ॥ भरद्वाजर्षिवंशेषुजातस्येशकृतात्मनः ॥ लीलाकल्पद्रुमोग्रंथःकृष्णप्रीतिकरःश्रुतेः ॥ अ
तोमात्सर्य्यमुत्सृज्यशृण्वंतुपंडिताःसदा ॥ यदत्रस्खलितंकिंचिद्विद्वांसःपूरयंतुतत् ॥ यदत्रसौष्ठवंकिञ्चित्तद्गुरोरेवमेनहि ॥ यदत्रासौष्ठवं
ग्रंथेतत्सर्वंमेगुरोर्नहि ॥ श्रीकृष्णश्रीरमानाथव्रजनाथार्त्तिनाशकृत् ॥ देहिवासंसदानाथमाथुरेनिजमंडले ॥ श्रीकृष्णमेजीवनमस्तिशेषं
यद्यातुतच्छ्रीव्रजराजमंडले ॥ श्रीमाथुरेमामधुनानुकंपाद्दृष्ट्याह्वयात्रैवममार्थनेयम् ॥ वृषभानुसुतानाथमामाहूयकृतिंमम ॥ वृन्दावनेशृ
णुविभोहृदयेशनिजप्रिय ॥ व्याख्यापुष्पमयीमालाश्रीवंशीधरशर्मणा॥ समर्पिताकृष्णकण्ठेप्रीत्योपादेहितेमया ॥ श्रीकृष्णमेपूरयचिं
तितंश्रीराधापतेनकठिनंतवकिंचिदस्ति ॥ त्वद्ध्याननिष्ठोममयातुकालोवृन्दावनेशव्रजमंडलगस्यनित्यम् ॥ पूर्णांभागवतींकथांतुसुधि
योयेश्रोतुमालस्यतोऽशक्तास्तत्कृतएषमेपरिकरःशृण्वंतुतेचादरात् । यच्छुत्याह्यवधानतःपरिमितासर्वाकथास्याच्छुतासोयंकल्पतरुर्हरे
र्विरचितोलीलादिमःप्रीतये।प्रमाणीभूतवाक्यानिपूर्वाचार्यकृतान्यपि ॥ निजग्रन्थप्रकाशेनपूर्वाचार्यमतिप्रदा ॥ संतिमेगुरवःसर्वेगुरवःपि
तरोमताः॥ पित्रार्जितस्वेपुत्रस्ययथास्वत्वंतथैवमे ॥ तेषांकृतौस्वकर्तृत्वाभिमानोविदुषांवराः ॥ अन्यथापितृद्रव्येषुपुत्रस्यापिनतद्भवेत्
॥ ४ ॥ सर्वाणिप्राक्तनान्येवपदवाक्याक्षराणिवै ॥ कर्तृत्वंमेस्तिग्रन्थेस्मिंस्तेषांयोजनमात्रतः ॥ २ ॥ इतिश्रीखरडनगरवासिकौशिकगो
त्रगौडवंशोद्भूतश्रीवंशीधरशर्मसंदृब्धःश्रीमद्भागवताद्यपद्यव्याख्यारूपलीलाकल्पद्रुमाभिधनिबंधस्समाप्तिमगात् ॥ खाम्नायाद्येनंदचंद्रे
हायनेमासिकार्त्तिके ॥ पूर्त्तियातोबुधदिनेग्रन्थोयंपक्षतौशुभः ॥ १ ॥ ॥छ॥ ॥ छ ॥

## श्रीमद्भागवत मोटा अक्षर श्रीधरीटीका व विशेषटिप्पणी सहित.

यद्यपि यह महापुराण अनेकवार मुद्रित होकर विकगया परंतु अद्यावधि ऐसे मोटे अक्षर और पुष्टकागजमे कभी नहीं छपाकि जिस्को ८० वर्षके उमरवाले पंडितजन विनाचस्मे पारायण करसक्ते है और अमृतरूपी कथा श्रवण करा सक्ते है यहभी हमने गणपत कृष्णाजीसे सबका सब मोल लेलिया है इसलिये मेरेही यहां मिलसक्ता है महाशय इसकी उत्तमता देखनेहीसे विदित होगी विकने पीछे ऐसी पुस्तकका मिलना अलभ्य होगामूल्य १२रु० मात्रही है. ट० म० ३॥ रु०

## श्रीमद्भागवत विजयध्वजी टीका समेत.

श्रीमद्भागवत तो सबकूं मालुमही है. इसके ऊपर आज न्यारे न्यारे संप्रदाय वालोंने अनेक तरहसे अनेक टीका है इसमे श्री सबसे अग्रेसरश्रीमध्वसंप्रदाय की महामहोपाध्याय विजयध्वजाचार्य कृत टीका अत्युत्तम है जिसमे प्रत्येकपदकी टीका स्पष्ट प्रमाण सहित बालबोध सुगम लिखी है. ग्रंथ संख्या अंदाजसे ८०००० होगा. इसकी पहिली किंमत १६ रुपये थी अबी सब लोगनकू ज्ञानलाभके वास्ते १० रुपया रक्खी हैऔर डाकमहसूल रुपया २

पुस्तक मिलनेका ठिकाणा– श्रीकृष्णदासात्मज गंगाविष्णु और खेमराज श्रीवेंकटेश्वर छापखाना (मुंबई)

एतत्पुस्तकं श्रेष्ठिवर्यश्रीघनश्यामतनयश्रीलक्ष्मीनारायणश्रेष्ठिनःसाहाय्येन
मुंबय्यां श्रीकृष्णदासात्मजाभ्यां गङ्गाविष्णु खेमराजगुप्ताभ्यां स्वकीये
श्रीवेङ्कटेश्वर नाम्नि मुद्रणालये मुद्रयित्वा प्रकाशमानीतम् ॥
शके १८११ संवत् १९४६

